श्रीगोपीजनवल्लभाय नमः ।

परममहानुभावपूज्यपादाचार्यवर्य-

गोस्वामिश्रीहरिरायचरणविरचितानि

# संस्कृतकीर्तनानि ।

गोस्वामिकुलकौस्तुभ-गोस्वामिश्रीगोकुलनाथमहाराजानामाज्ञया काशीनिवासि-नैष्ठिकब्रह्मचारि-श्रीप्रकाशानन्दजीमहोदयानां द्रव्यसाहाय्येन च प्रकाशितानि
विद्वद्वर्य पं० भट्टश्रीबलभद्रशर्ममहोदयैर्दे० पं० श्रीरमानाथशास्त्रिमहोदयैश्च संशोधितानि ।

प्रकाशकः—

पं. भट्टश्रीगौरगोपालशर्मा

व्यवस्थापक-श्री. वा. शु. सं. पुस्तकालय,

बड़ामन्दिर भूलेश्वर, बम्बई २.

मुद्रणालयम्-निर्णयसागरप्रेस-मुंबई.

प्रथम संस्करण ।] [वि. सं. १९९९.

श्रीहरिः

सुदुर्लभमिदं संस्कृतकीर्तनपुस्तकं पूज्यपादगोस्वामिकुलकौस्तुभ-गोस्वामिश्रीगोकुलनाथजीमहाराजैर्नित्यलीलास्थाखण्डसौभाग्यवतीस्वधर्मपत्नीश्रीकुसुमप्रभावहूजीनां स्मरणार्थं मुद्रापितम् ।

येषां बह्वायासेन समुपलब्धमिदं पुस्तकरत्नं यैश्च संशोधितं ते सपरितोषं शतशो धन्यवादार्हाः ।

अस्य मुद्रापणे द्रव्यव्ययः काशीनिवासि-स्वधर्मनिष्ठनैष्ठिकब्रह्मचारि पं. श्रीप्रकाशानन्दजीमहोदयैः सादरं साग्रहश्चोपहारीकृत इति शम् ।

निदेशानुवर्ति-प्रकाशकः—

श्रीगोपीजनवल्लभाय नमः ।

श्रीगोस्वामिश्रीहरिरायविरचितानि

# संस्कृतकीर्तनानि ।

वर्णये वल्लभाधीशचरणं । सकलसाधनविमुखमुख्यफलफलनसंसारसरितादशागोचरणकरणम् ॥ १ ॥ नीलमणिमञ्जुमञ्जीरमञ्जुलरणितभणितनिजभक्तजनजनितभावम् । राजते रुचिरकलहंसयुगलं किमुत मानजनचित्तहरमधुररावम् ॥ २ ॥ कोटिकंदर्पसुषमाऽसीम निजरूपशमितविरहानलोज्ज्वलितभक्तम् । किमुत पदपद्मलसदङ्गुलीमधुपकुलमरुणमकरन्दयुतरेणुरक्तम् ॥ ३ ॥ अतिरुचिररम्यपदपद्मपल्लवं तुल्यविलसदङ्गुलीवृन्दसुखमयालम् । किमुत शृङ्गाररसविटपपरभागयुतभूमिगतसरसतममूलजालम् ॥ ४ ॥ प्रथितनिजभावदूरीकृताखिलदोषमोषसाधनितकलिराजकालम् । अङ्गुलीवीथिविद्योतनारुणवरं किमुत पल्लवशोभनवरसालम् ॥ ५ ॥ स्फुरदधोरक्तिमोपरितनश्यामिकाविदितनिशिगतं सुखवितानम् । दशसङ्ख्यनखसुधाधिपतिसततस्थानजातविज्ञातगगनोपमानम् ॥ ६ ॥ उपरिगतनखचन्द्रवृन्दयोगामन्दजातशोभाभृदङ्गुलीजटालम् । किमुत पदकमलयुगसरसपल्लववृन्दविकसदग्रारक्तचक्रवालम् ॥ ७ ॥ विगतसाधनमथो कृतसमाराधनं जीवमतिबाधनं पाहि नित्यम् । दीनमिह जलवियुतमीनमिव मादृशं मतिरहितमङ्ग तव भृत्यभृत्यम् ॥ ८ ॥ सहजकस्तूरिकातिलकशोभितभालविठ्ठलाधीशपदतलनिवासम् । देहि निजरूपदर्शनजनिततापमिह सकलसिद्धार्थहरिदासदासम् ॥ ९ ॥

रामगरीरागेण गीयते ।

वन्दे वल्लभवरतनुजम् । भक्तिसरणिशरणीकृतसाधनरहित-
सकलमनुजम् ॥ १ ॥ सुन्दररूपविबोधितभाववशीकृतगोकुलनाथम् ।
निरुपमभावितचतुरतमं मम विट्ठलनाथम् ॥ २ ॥ हरिसम्बन्धव-
तीसमुदायविविधसम्बन्धसहायम् । अतुलवचनतोषिततरुणीजन-
जीवनपतिमतिमायम् ॥ ३ ॥ मनोवचोगोचरकृतिविज्ञापितनिजगति-
महिमानम् । निजसेवकसेवितपदकमलयुगानतहृदयालानम् ॥ ४ ॥
प्रकटीकृतवृतजीवसुखालयरसमयमञ्जुलरूपम् । श्रीभागवतविवृ-
तिबोधननिजजनमतिशोधनभूपम् ॥ ५ ॥ निजपीयूषविजित-
विधुमण्डलमञ्जुलवदनसरोजम् । अखिलमनोमोहननिजसुषमा-
विरहितमानमनोजम् ॥ ६ ॥ मृगमदसम्भवसहजतिलकशोभित-
सौभगनिधिभालम् । कुञ्चितचिकुरसमावृतिवदनविनिर्जितमधुकर-
भालम् ॥ ७ ॥ कृपयति स मयि कदापि हृदा किङ्करकिङ्करहरि-
दासे । भवतु परं गोपीपतिचरणकमलदासपरिवासम् ॥ ८ ॥

श्रीरागेण गीयते ।

एहि मम गोकुलाधीश सदनम् । समयविरहानलं वपुरलं कुरु
सखे रहसि दर्शय रसिक सरसवदनम् ॥ १ ॥ अन्यगेहेषु वद कि-
मिति गच्छसि किमिति सहसे तदुपालम्भभूरिवचनम् । नैव कथ-
यिष्यामि मातृपदसन्निधौ रुचिरतरबाललीलाविरचनम् ॥ २ ॥ मृदु-
लपल्यङ्कमथवा नाथ दासिकाहृदयमभितिष्ठ चिरकालशयनम् ।
कोटिकंदर्पलावण्यरूपामृतैरहह शिशिरय मामकानुनयनम् ॥ ३ ॥
एवमेवैवमिह चिन्तयामीश चिरकालमहमातुरा विपिनगमनम् ।
नित्यमागच्छ सङ्कोचमपि मैव कुरु चरणपतिता बहु करोमि नम-
नम् ॥ ४ ॥ नैव विदितं भवेदेतदागमनमिह नाथ कस्यापि कृत-
वत्ससङ्गम् । मोहकं रूपमपि मुग्धभावामृतैरतिमृदुलतमरुचिरविल-
सदङ्गम् ॥ ५ ॥ मुखकमलदर्शनाभावसञ्जातपरितापभरचिरविहित-

देहदहनम् । शमय पूरय सदा मम मनोरथमहो विविधगतिचित्त-
गतभावगहनम् ॥ ६ ॥ नाथ ते गृहमहं दासिका तावकी कुलम-
खिलमेव तव चरणशरणम् । अन्यथा नाथ विफलीभावि सर्वथा
जीविताधीश तव पुष्टिवरणम् ॥ ७ ॥ मनसि निवसतु सदा दास-
हरिदासकस्यैतदेवेह निजनाथमिलनम् । वल्लभाधीशचरणश्रयण-
मात्रमपि कुरु चित्त नित्यमानन्दगिलनम् ॥ ८ ॥

कर्णाटरागेण गीयते ।

मिल माधवमयि वेणुधरं सुन्दररूपविमोहितयुवतिवृन्दरसि-
कवरं । रजनीपतिमपि दिनपतिमिव कलयति ते चिरविरहेण ।
चन्दनमपि सखि भस्मसमानं व्याकुलतानिवहेन ॥ १ ॥ बहु दीनं
कथयति तव सङ्गमसञ्जननाय मुखेन । गुञ्जद्भ्रमरघने विपिने
पवनेन दुनोति सुखेन ॥ २ ॥ तव पदवीमभिपश्यति भामिनि स-
चकितनयनयुगेन । गोपीपरिवृढमपि वशगं कुरु मनसा मदनानुग-
तेन ॥ ३ ॥ तपति जलजशयनेऽपि परं सञ्जातसुखस्मरणेन । बहु
तनुते सन्तापभरं सखि मारशराहरणेन ॥ ४ ॥ पुनरुत्थाय मृदुल-
पल्लवशयनं विदधाति करेण । किं कथयामि परं बहुवारं नाम जपति
सुचिरेण ॥ ५ ॥ द्रुतमभिसारसमयशृङ्गारमकारि तया रभसेन ।
मिलिता नन्दकिशोरचतुरचूडामणिना सरसेन ॥ ६ ॥ नो वचनीय-
मियं सुखजातमवाप किशोरवरेण । श्रीमन्नन्दकुमाररुचिरगोवर्धन-
शैलधरेण ॥ ७ ॥ श्रीविठ्ठलचरणानुसारिणा चरितं तदनुचरेण ।
श्रीवल्लभकृपया रचितं हरिरायवराकतरेण ॥ ८ ॥

गुर्जररागेण गीयते ।

गोचारणकरणाय विपिनमिह गतवति नन्दकुमारे । मम मनसा
सङ्गे गतमधुना सखि सुन्दरतासारे ॥ १ ॥ बर्हशिरोभूषणकृतरो-
षणवशितयोषिदाधारे । विविधकुसुममृदुपल्लवमिलदलिकुलविल-
सितकचभारे ॥ २ ॥ नयनमीनयुगयुतनिजतनुलावण्यसुधाकूपारे ।

१ रव.

कर्णकुसुमकुलकम्बुसमाकुलगच्छपुलिनपरिवारे ॥ ३ ॥ विकसितनासाश्रुतियुक्तमुक्ताफलरुचिराकारे । चुम्बनमथनविनिःसृतबिम्बाधरमधुलोभितनारे ॥ ४ ॥ कम्बुकण्ठविलुठितमुक्ताफलविरचितसुरुचिरहारे । मृदुकमनीयकलेवरसुषमाविगतमानजितमारे ॥ ५ ॥ वरदाभयलक्षणयुगशोभितकरयुगपरमोदारे । तनुतरकटिविलसितविज्ञापितयुवजनकठिनविहारे ॥ ६ ॥ ऊरुयुगलरम्भापटपल्लवचरणकुसुमसुकुमारे । अङ्घ्रियुगं मम शिरसि सदा कुरु बहु विलपामि मुरारे ॥ ७ ॥ श्रीवल्लभपदसरसिजसेवनमेव सदा सविकारे । विज्ञापनमियदेव करोमि हरे कृपयाशु सदा रे ॥ ८ ॥

वसन्तरागेण गीयते ।

अवलोकय सखि मञ्जुलकुञ्जे । रमयति गोकुलरमणीरिह गोकुलपतिरलिकोकिलपुञ्जे ॥ १ ॥ माधविकालतिकारतिकारिणि रागिणि सरसवसन्ते । त्रिविधपवनकृतविरहविधूननमदननृपतिसामन्ते ॥ २ ॥ किंशुककुसुमसमीकृतदयिताधररसपानविनोदे । मधुपसमाहृतबकुलमुकुलमधुविकसितसरसामोदे ॥ ३ ॥ नवनवमञ्जुरसालमञ्जरीबोधितयुवजनमदने । दयितारदनसमद्युतिमुकुलितकुन्दचिरस्मृतवदने ॥ ४ ॥ युवतिजनमानसगतमानमहागजमदमृगराजे । कोकिलकुलकूजितविरहानलतापितपथिकसमाजे ॥ ५ ॥ विततपरागकुसुमसम्बन्धिसदागतिवासितगहने । कुसुमितकिंशुककैतवविस्तृतविरहिदहनवनदहने ॥ ६ ॥ पल्लवकुसुमसमेतविपिनविस्मारितयुवजनगेहे । मदनदहनदीपनविद्रावितविरहिदीनजनदेहे ॥ ७ ॥ जगति समानशीततदितरविरचितनिजरुचिराकारे । वनिताजनसंयोगसेविजनजनितानन्दसुभारे ॥ ८ ॥ दूतीहितकारिवचनमतिमानिनि मानय गोकुलवासे । कुरु रतिमतिशयकरुणारसव्रति वितर मतिं हरिदासे ॥ ९ ॥

---

१ सदारे. २ वधूजनमदन.

गन्धाररागेण गीयते ।

दर्शय मामतिदीनं सुन्दरगोकुलनृप निजवदनम् । रहसि मया मिल माधव सततं दयित विभूषय सदनम् ॥ १ ॥ सपदि निवर्तय निजकोमलवपुषा रतिपतिकदनम् । यदपि मया कथितं दोषेण कृपापर निष्ठुरवचनम् । स्थापय मा निजचेतसि मानद विरहविविधरचनम् ॥ २ ॥ शृणु करुणालय दीनतमं खलु दुःखिततावकनदनम् ॥ ३ ॥ भवति न नाथ वियोगभरेण दृगम्बुधिजलतरणम् । तपति हृदयमधुनाऽहितनाशन मुहुरनुचितकरणम् ॥ ४ ॥ किमिदमशक्यं नायक येन कृतं गोवर्द्धनधरणम् । स्वजनविहितशतदोषनिवारक माद‍ृशदुर्मतिहरणम् ॥ ५ ॥ त्यजसि हरे किमु दीनतमं मामधुनाऽविहिताचरणम् । वितरति फलमभिलषितमनुत्तमपदकमलादरणम् ॥ ६ ॥ सततमहं विश्वसिमि फलिष्यति विरचितमद्धरणम् । वद वदनामृतकिरणशिशिरतररूप क इह मम शरणम् ॥७॥ विज्ञापनमिदमेव हरे वारय विरहानलमरणम् । भवतु सदा वल्लभवरचरणं मम शरणं कृतभरणम् ॥ ८ ॥

वेलावलीरागेण गीयते ।

श्रयतु हरिं मम मानसमधुना । परिपूरयतु चरणमधुना ॥ ध्रु० ॥ नन्दगृहे सततं निवसन्तं दर्पणदर्शनतो विहसन्तम् । कमलसदृशमुखरसिकरसालं । स्तुतमकरन्दकपटकृतलालम् ॥ १ ॥ ग्रथितालकमुक्ताफलभूषं पीतपयोविरचितगण्डूषम् । जननीकृतगोरोचनतिलकं श्यामलमध्यबिन्दुलसदलिकम् ॥ २ ॥ गोपीजनमुखचन्द्रचकोरं । चकितविलोकितमानसचोरम् । मुखरितनूपुरगतिविलसन्तम् ॥ ३ ॥ हरिनखभूषणभूषितहृदयम् । निजजनतापहरणकृतिसदयम् । हृदयविराजितमणिगणहारम् । नवनीतादपि सखि सुकुमारम् ॥ ४ ॥ निजदेहद्युतिनिर्जितमारम् । वक्रविलोकनमोहितनारम् । भक्षित-

गोपीगृहनवनीतम् । स्तोभकवचनविहितसङ्गीतम् ॥ ५ ॥ लड्डुकदानजातबहुहर्षम् । बहुविधनृत्यरचितसुखवर्षम् । सङ्गीकृतबालककृतलीलम् । तदुपालम्भसमयभयशीलम् ॥ ६ ॥ प्रहसितमातृचरणमुखदृश्यम् । तस्करतासमये न स्पृश्यम् । लज्जाभरनामितनिजवदनम् । ज्ञापितभक्तिरहितजनसदनम् ॥ ७ ॥ मुग्धाननदर्शितनिजरूपम् । वदनविविक्तभूमिजलभूपम् । श्रीवल्लभपदसरसिजवासम् । पश्य कदापि दृशा हरिदासम् ॥ ८ ॥

विभासरागेण गीयते ।

विजितमदननृपसुभटरणे । मम रतिरस्तु सुकृतवरणे ॥ ध्रु० ॥ उषसि मुषितसकलाभरणे । शिथिलकलेवरगिरिवरधरणे ॥ १ ॥ अञ्जनचिह्नविराजितवदने । निजसुषमाजितकमलासदने ॥ २ ॥ कुन्दसमद्युतिराजितरदने । मेघगिरा कृतसालसनदने ॥ ३ ॥ अनुनयकरणनायिकानम्रे । राधाधरमधुलेहनकम्रे ॥ ४ ॥ जागरजनितारुणगुणनयने । निद्रालसभूयःस्मृतशयने ॥ ५ ॥ दर्पणदर्शनरचितविहसने । रहसिविपरिवर्तितनिजवसने ॥ ६ ॥ दयितापदनतिकुङ्कुमभाले । अनुकृतदिनकरसमुदयकाले ॥ ७ ॥ श्रीवल्लभपदनीरजवित्ते । हरिदासे वस तद्गतचित्ते ॥ ८ ॥

कर्णाटरागेण गीयते ।

मानय मदुदितवचनं राधे । कुरु करुणामयि गोकुलरमणीमिलनविकसदपराधे ॥ १ ॥ कुवलयदलनीले लीने तव रूपसुधाकूपारे । सुन्दरवदनविधुस्मरणाहितबहुतरमनसिजभारे ॥ २ ॥ बर्हिपिच्छपिच्छिलकचभारविराजितमालतिमाले । तिलकगन्धफलमिलितमधुपकुलकुन्तलविलसितभाले ॥ ३ ॥ भ्रूयुगचापतमालपत्रविशिखाहतयुवतीवृन्दे । मानसमृगवधूवधकमानपञ्चाननभयमतिमन्दे ॥ ४ ॥ वादितवेणुफुल्लतरनासातरलितसचकितनयने । प्रति-

विटपं प्रतिपत्रं सुन्दरि मनसा विहितमृगनयने ॥ ५ ॥ स्फुटनिर्गतनिश्वासमधीरे विहितविविधगुणगाने । विरहदहनकृतदेहविधूननपरिगततापनिधाने ॥ ६ ॥ भूमिलुठननिर्विघ्नसिद्धिसम्पादितरसनिधिरूपे । मदनदेवपूजाकृतिविरचिततापपवनबहुधूपे ॥ ७ ॥ श्रीवल्लभवरचरणकमलपरिचरणनिकटकृतवासे । कृपय परं दीनैककृपापर निजदासे हरिदासे ॥ ८ ॥

नटरागेण गीयते ।

राधिकया सकलाधिकया सह विविधविकृतिसहितो बहु विहसति । हिन्दोले हरिरिह सखि विलसति ॥ १ ॥ नवजलदे चपलासहिते मुहुरतिधीरं खलु गर्जति । मृदुकुसुमोपमबिन्दुगणानभितोऽभिरतोपरि वर्षति ॥ २ ॥ विविधवर्णवसनाभूषितयुवतीनिकरे मृदु गायति । मुहुरनुपदमथ मुद्रितनयनं निजपतिरूपं ध्यायति ॥ ३ ॥ विविधकुसुममकरन्दगन्धमोहितमधुपे सखि विचरति । यमुनोपवनसततसेवनपवने सुरजो ननु विकिरति ॥ ४ ॥ रमणीवदनविधूदयमोदितनयनकुमुदयुगले विकचयति । सुन्दरतासरसीरसमज्जनसजलतरे मुहुरुदयति ॥ ५ ॥ विरचितसुकृते गोपीनिकरेऽनुपमसुखं सखि विन्दति । निजनाथे करुणैकदृशा मुहुरुचिरतरं प्रतिभिन्दति ॥ ६ ॥ एतादृशमत्प्रभुलीलामथ चित्तमिदं विचिचीषति । विषयदोषमतिपोषविहितकुमतिं क्षणतो विजिगीषति ॥ ७ ॥ श्रीवल्लभपदकमलयुगलपतिते दीने वस कल्पति । हरिदासेखिलविरचितहासे विरहवशेन च जल्पति ॥ ८ ॥

श्रीरागेण गीयते ।

चल सखि खिन्नं सुखय निकुञ्जे । गुञ्जति मधुरमधुपकुलपुञ्जे ॥ ध्रु० ॥ मानय वचनं परिहर मानम् । किं कुरुषे भज विरहितमानम् ॥ उचितमये निजपतिसन्मानम् । सुखमनुभवपीयूषसमा-

नम् ॥ १ ॥ विविधवर्णवसनं परिधेहि । भूषणमयि नासादिषु देहि । निशि विजने सति सरभसमेहि । जीवनफलमिदमेवमवेहि ॥ २ ॥ अवलोकय सखि सकलकलेशम् । निजकरधवलितकाननदेशम् । लीलासमकालिकचित्तेशम् । सुमुदितफलनिश्चयसन्देशम् ॥ ३ ॥ भावय भामिनि भावितरूपं गोगोकुलसाधारणभूपम् । निःश्वासैरिह तनुषे धूपं पूरय बहु भोजय रससूपम्[१] ॥ ४ ॥ विविधलतापल्लवशतवलितम् । कुसुमितविटपिविविधफलफलितम् । व्रजनाथेन दृशा परिकलितम् । वृन्दावनमवलोकय ललितम् ॥ ५ ॥ सेवय पल्लवविरचितशयनम् । सफलय सुन्दरि मामकनयनम् । किमिति तनोषि वृथैव निलयनम् । निजहृदि कुरु पुरुरससञ्चयनम् ॥ ६ ॥ तडिदिव जीमूते यदि सततम् । राजसि सुखमनुभवसि सुविततम् । अनुमतमस्माकं नहि विहितम् । वीजनमपि कुर्मो यदि सुरतम् ॥ ७ ॥ कथितमिदं सुखयतु हरिदासम् । श्रीवल्लभपदयुगविश्वासम् । श्रीभागवतविचारविलासम् । कृपय कृपापर दर्शय रासम् ॥८॥

भैरवरागेण गीयते ।

वन्दे शरणगताभयदम् । निजविरहाकुलमानसजनजीवनपरितोषनिजाशयदम् ॥ १ ॥ निरुपधिकरुणारसपरिपोषिततोषितभक्तजननयनम् । निजनामस्मरणातुरनिजजनविरचितविविधपापलयदम् ॥ २ ॥ व्रजयुवतिजनजीवनमूलं परिहितकर्बुरपीतदुकूलम् । निजविद्वेषिजनप्रतिकूलम् । दूरीकृतजनमानसशूलम् ॥ ३ ॥ वारितविरहमनोगतमानम् । शोषितविषयमहाविषपानम् । विदलितविविधविकसदज्ञानम् । सम्पादितसाधनगुणगानम् ॥ ४ ॥ कोटिमदनदेहद्युतिललितम् । रासादिकलीलाशतवलितम् । समुदितसर्वभावजनकलितम् । कलमुरलीमधुराधरचलितम् ॥ ५ ॥ सङ्गीकृतगोकुलकुलबालम् । गोचारणगतिरतिगोपालम् । आगतसुरविद्वे-

१ रसरूपम्.

षिकरालम् । परिपालितलीलाबहुतालम् ॥ ६ ॥ सन्ध्यागतिसन्तोषितभक्तम् । व्रजयुवतिजनलीलासक्तम् । समुदितमदननयनमदरक्तम् । सफलितविविधरमणनिजभक्तम् ॥ ७ ॥ श्रीवल्लभवरचरणाधारम् । सततस्मृतसेवितसंसारम् । कृपय सदा हरिदासमसारम् । तारय परिगतजलधिमपारम् ॥ ८ ॥

रामकरीरागेण गीयते ॥ १४ ॥

पालय नन्दालयकृतवास । अनुकम्पासम्पादितदास । शयनारुणनिजनयनविकास । सालसतासञ्चितपरिहास ॥ १ ॥ विषमचलन विषमाहृतमान । नयनयुगलसूचितरतिदान । रससम्बन्धविलसदज्ञान । अतिशयशिथिलपीतपरिधान ॥ २ ॥ नखरलिखितमृदुसकलशरीर । वपुषा सेवितशिशिरसमीर । मायिकवचनरचनबहुधीर । व्रजयुवतिजनशिक्षाकीर ॥ ३ ॥ नन्दनन्दन मदनाधिकसुन्दर । प्रकटितवृन्दाविपिनपुरन्दर । सेवितगोवर्धनगिरिकन्दर । अमृतमथनसमये धृतमन्दर ॥ ४ ॥ ग्रथितमुकुटमेचककचभार । कुन्दकुसुमविरचितश्रृङ्गार । शोभाजितनीरजविधुमार । लीलाविहितविघ्नपरिहार ॥ ५ ॥ चरणपतनकुङ्कुमयुतभाल । अतिरतिविगलितनववनमाल । परिवर्तितकरसरसिजनाल । गोपितकृतिलीलागोपाल ॥ ६ ॥ भावितभाववतीजनभाव । एकतानमानसहितदाव । श्रुतकोकिलकुलमधुराराव । एकदृष्टिदर्शितमृगशाव ॥ ७ ॥ सततस्मृतफललीलारासे । कृपयतु गोपीपतिविश्वासे । हरिरिह वल्लभवरपदवासे । गीतागणितगुणे हरिदासे ॥ ८ ॥

श्रीरागेण गीयते ॥ १५ ॥

सुतवदनं भावयति यशोदा । खेलनजनितमनसि (?) मोदा । रुचिरालकततिसंहृतिरुचिरं । सन्ततचिन्तितबालविनोदा ॥ १ ॥ मीनसमानचपलनिजनयनं केवलभावविभावनदीना । वत्सलता-

कृतबाहुलतापरिरम्भणसमयविवेकविहीना ॥ २ ॥ उभयरेखमतिमञ्जुलतिलकं। निहिततदन्तरपरिगतचित्ता। लसदलिकाहितकज्जलबिन्दुम् । धनमिव सङ्गतविरहितवित्ता ॥ ३ ॥ मृदुलकपोललोलकुण्डलयुगमतिशयभावनभावविभागा। गगनराजदरुणांशुसमानं। प्रकटितहृदयविलसदनुरागा ॥ ४ ॥ वेणुवादविधिफुल्लनासिकम्। सुन्दरतालोकन(?)मोहा। नासाभूषणमुक्ताचलनं चिरलब्धानन्दथुसन्दोहा ॥ ५ ॥ अरुणाधरफलनिर्जितबिम्बं निजकरकृतनवनीत सुभक्षा । सुन्दरतापातितजनदृष्टिम् । गोरजसा बहुतरकृतरक्षा ॥ ६ ॥ सहजनीलतमचिबुकसुरुचिरं चिरसञ्चितचेतसि (?) भावा। आविर्भावितबालकलीलं विरचिततातततेतिविरावा ॥ ७ ॥ श्रीवल्लभवरचरणावासे हरिदासेऽपि करोतु सदा। करुणामिति (?) जानातु मदीयोऽयमिति हरे परवश्य हृदा ॥ ८ ॥

अडाणारागेण गीयते ॥ १६ ॥

प्रियसुत मुग्धविनोद वद विपिने किं किं विहितम्। पल्लवचयमतिवल्लभमधुना कुत्र शिरसि निहितम् ॥ १ ॥ गैरिकरुचिविचित्रितवदनं कुत्र कृतं ललितम्। कचचयमतिशयमेचकरूपं बर्हिपिच्छकलितम् ॥ २॥ पायितमतिशीतलनीरं गोधनमिह यमुनातीरे। कुत्र धौतमतिघर्मनिवारणकृतये निर्मलनीरे ॥ ३ ॥ उपविष्टमिष्टविटपिच्छाये सुत कुत्र गोपसहितेन। प्रेषितमितो मया वद भुक्तं भवता वनेषु हितेन ॥ ४ ॥ चारितमतिकोमलतृणवति देशे गोकुलमथ कुत्र। कण्टकनिचयमितो खलु लग्नं चरणं दर्शय पुत्र ॥ ५ ॥ विलसितमिति वद कया लीलया भवता बालकुले। ब्रूहि कुत्र मिलितैरथ धावितमिति विपिने विपुले ॥६॥ स्थेयमतो (?) बलभद्रयुतेन सदा भवतातिभयेन। इति विज्ञापितमहह मदीयं मानय बहु विनयेन ॥ ७ ॥ कृपय सदा सुहृदा वरसूनो गृहदासे हरिदासे। श्रीवल्लभवरचरणकमलसेवनविरचितपदवासे ॥ ८ ॥

टोडीरागेण गीयते ॥ १७ ॥

कुत्र गतं निशि गोकुलनायक। अन्यहृदयहितपञ्चसायक। नैवंकरणमहो समुचितमिह व्रजयुवतीजनबहुसुखदायक ॥ १ ॥ वदसि विनयवचनानि न तानि विशन्ति हृदयमतिमानम्। चित्तमितरयुवतीषु लग्नमिति नैव मानये तव सन्मानम् ॥ २ ॥ प्रकटमखिलमङ्गेषु दृश्यते सम्प्रति चिन्हनिचयः। कृतिविरहितमथ कथं मानये नाथ वचनविनयम् ॥ ३ ॥ दर्शयसीह शिथिलमुष्णीषं रूपमथो विकलम्। रचितमिदं निजदुःखकृते भवता सुन्दर सकलम् ॥ ४ ॥ कुङ्कुममृगमदगन्धरेणुयुतवनमाला हृदये । कथमेवंकरणं घटते शृणु मदभिमुखं सदये ॥ ५ ॥ नक्षत्राणि मया गणितानि निखिलनिशि रहसि निकुञ्जे। अहमपि सखीयुता हृताशाभूवं सतिमिरपुञ्जे ॥ ६ ॥ जागरणारुणनयनयुगं कुरु निर्मलमिह नीरेण। विहितं कथमु नियुद्धं भवता वद युवतीवीरेण ॥ ७ ॥ श्रीवल्लभपदकमलरेणुवल्लभहरिदासवराके । कुरु करुणामनुरागशिशिरतरविरचितदोषविपाके ॥ ८ ॥

नटरागेण गीयते ॥ १८ ॥

सायमिह भोजयति बालकं माता । अतिमृदुलमुग्धे दुग्धौदनं निजमुखे सपदि विदधातु मम सकलसुखदाता ॥१॥ प्रतिकवलमेतदपि वचनमभियाचते दत्तचित्तेन खलु भोजनीयं पुरा। खेलनीयं ततो बालकैरखिलजनैरिति वदति डिम्भ किमिति त्वरा ॥ २ ॥ विपिने चरितं त्वया किमिति वद मत्पुरः पृच्छति प्रायशो गोपकुलपालकम्। वीजयति दक्षिणकरेण कमलालयं मार्जयति वामतो वदनमपि सालकम् ॥ ३ ॥ मुखविगलितं पयोबिन्दुचयमद्भुतं प्रोञ्छति प्रवणतरदत्तदृष्ट्या। भवति सुखिता परं निजसूनुदर्शने वदनलावण्यपीयूषवृष्ट्या ॥ ४ ॥ लोकसिद्धामथो कथयति प्रियकथामतिहसितमुग्धमुखदत्तनयना। नैव सहते परं भोजनविलम्बनं

भावितस्वच्छपर्यङ्कशयना ॥ ५ ॥ बालचरितानि ललितानि खलु गायति प्राणसदनानि रदनानि दृष्ट्वा । सीत्करोति ह रोमाञ्चति प्रतिपदं हसति रोदिति परं मनसि हृष्ट्वा ॥ ६ ॥ अङ्कमुपवेश्य करयुगलमनु धावयति मुखगतं ताम्बूलमथ मुखे दत्वा । उत्सङ्गमारोप्य मृदुलशयने मुदा शाययति वनखिन्नमत्र मत्वा ॥ ७ ॥ निजवदनचर्वितं पीयूषगर्भितं भुक्तशेषितमथो यच्छ हरिदासके । वल्लभाधीशपदकमलसेवनविहितभावभरसञ्जातभक्तिसुखयाचके ॥ ८ ॥

भैरवरागेण गीयते ॥ १९ ॥

उषसि वद गोकुलाधीश कुत आगतम् । इतरयुवतीजनितचिन्हशतवलितवरमृदुलदेहेक्षणे सपदि मनसा गतम् ॥ १ ॥ किमु गृहं विस्मृतं नाथ मनसि स्थितं मद्गृहं दुःखजननस्मरणमागतम् । याहि निजभवनमतिभाषणं त्यज मया शृणु दयारहित मम नैव सुरुषा गतम् ॥ २ ॥ मानमुन्मूलयितुमुद्यतो भवसि वद कथमु निस्सारयसि विरहपरिखागतम् । अधिकमधिकं सपदि समुदयति मानसे दोषगणनं निखिलनाथ कुपथागतम् ॥ ३ ॥ यत्र तव मानसं विषयकृतलालसं गच्छ तत्रैव बहु यच्छ मुखमागतम् । तन्मनोरथमखिलमाशु पूरय हरे हर विरहदुःखभरमहह विरहागतम् ॥ ४ ॥ परमहं वेद्मि न तु विस्मरामीश, नहि विस्मरस्यहह गोकुलनृप हृदागतम् । त्वमपि हि स्मारयितुमागतो गोकुलाधीश करवै किमुत कल्यसमुपागतम् ॥ ५ ॥ एतदेवास्ति विज्ञापनं नाथ मम तिष्ठ हृदये सततमद्य तु यथाऽऽगतम् । याहि कुरु शयनमतिजागरारुणतरे लोचने शमय परितापमलसागतम् ॥ ६ ॥ इति वचनजातमतिमानिनीवदनसञ्जातमाकर्ण्य ननु हृदयकमलागतम् । पूरयतु गोपिकाजनमनोरथमखिलमद्भुताकारमतिशयितसुभगागतम् ॥ ७ ॥ देहि वल्लभचरणराजीवरेणुमपि विषयिजनसङ्गदुर्मतिविरो-

धागतम् । धर्मरहितं सहितमतिदोषकारकैरहह हरिदासमथ चरण-
शरणागतम् ॥ ८ ॥

धन्याश्रीरागेण गीयते ॥ २० ॥

भजे सखि गोकुलेशम् । नन्दभवनभूषणं नखभूषितहृदयदेशम् ॥ ध्रु० ॥ मन्दहासफुल्लनासरुचिरमुखसरोजम् । वदनचन्द्रकिरण-कान्तिरहितमानमनोजम् ॥ १ ॥ वदनकमलमधुपवदतिराजदलक-पुञ्जम् । बर्हमुकुटतटविलासिबहुविचित्रगुञ्जम् ॥ २ ॥ युवतिमुख-कमलमधुपचञ्चलतरनयनम् । अनुपमनिजनिहितभावसततकृतमृ-गनयनम् ॥ ३ ॥ भ्रूतटधृतमातृविहितवर्तुलमषीबिन्दुं । मुखजित-पीयूषभरितचिन्हविलसदिन्दुं ॥ ४ ॥ मृदुकपोललोलयुगलकुण्डल-कृतशोभम् । हीरककृतचिबुकभूषणविरचिताविक्षोभम् ॥ ५ ॥ कण्ठ-शोभिमुक्तामणिभूषणोदितग्रीवम् । भावभरतया वशीकृतयुवति-जनजीवम् ॥ ६ ॥ कटितटगतपीतवसनशोभितनिजरूपम् । पदन-खसुषमाविमानसुरनरमुनिभूपम् ॥ ७ ॥ विज्ञापनमेतदेव मानय मम वचनम् । श्रीवल्लभचरणकमलकृपया कृतरचनम् ॥ ८ ॥

मल्हाररागेण गीयते ॥ २१ ॥

प्रियसखि विरहे विपिनविचरणम् । विरहिमनुजशरणम् । गोकुलपतिपदभाववतामतिशयितशोकतरणम् ॥ ध्रु० ॥ १ ॥ विवि-धविटपियुतलतावृन्दसन्दर्शनजनितानन्दम् । शिशिरितनिखिलश-रीरपवनविचलितनवकुसुममरन्दम् ॥ २ ॥ मुदिरमुदितमानसघन-नादविलासिरवश्रवणम् । अद्भुतपक्षतियुगघर्षणं कृतहृदयदुःखवि-द्रवणम् ॥ ३ ॥ फलितरसालशालशाखागतपिककूजितकसुखम् । स्थलकमलाहितशोभोपमितयुवतिजनसरसमुखम् ॥ ४ ॥ हरितर-सालोकनचिन्तितहरिरूपनामयुगलम् । संवर्द्धितहृदयाहितराग-गानकृतिरणितगलम् ॥ ५ ॥ गगनविलसदतिघनघनवृन्दविलोकन-

कृतसुखदानम् । कम्पितशाखागतमृदुपल्लवचलनविहितसन्मानम् ॥ ६ ॥ विविधस्थलविरचितलीलाविज्ञापनबहुतरनिपुणम् । प्रियसन्निधिसुखनिचयविचारणपरमानसकृपणम् ॥ ७ ॥ ईदृशदशायुतं हरिदासं दर्शय गगनविहारम् । हृदयनिहितहरिवल्लभवरपदनखविद्युतिमणिहारम् ॥ ८ ॥

केदाररागेण गीयते ॥ २२ ॥

मानिनि सहसे किमतिवियोगम् । कुरु हरिणा सम्भोगम् । वारय तदधरपीयूषेण विषमचेतोभवरोगम् ॥ १ ॥ निजहस्तावचितातिमृदुलतरकुसुमरचितशयनेन । प्रतिपदमवलोकितपदवीकृतचपलचकितनयनेन ॥ २ ॥ भावितशयनशयितभवतीसन्दर्शनजनितसुखेन । कृपयिष्यति दयितेतितोषभरसन्ततिहसितमुखेन ॥ ३ ॥ पुनरपि तालवृन्तकृतपवनविशेषवशितहृदयेन । श्रमबिन्दूनि कलयता वदनकमलमनसा सदयेन ॥ ४ ॥ कुटिलालकततिनयनसमागतिरतिजागरभीतेन । मारशरैरतिपरुषतरैरिह विरहदशां नीतेन ॥ ५ ॥ मुखकमलाहितगन्धलोभगुणभरगणितश्वासेन । स्तनतटलुलितहारशोभाभरसततस्मृतरासेन ॥ ६ ॥ संवाहितसरसिजसुन्दरभावितपदकमलयुगेन । सकरुणहृदयकमलसम्पादितभाववदेकसुगेन ॥ ७ ॥ श्रीवल्लभपदकमलविमलमतिहरिदासे सदयेन । मनसा सखि भावय निजभावं भाववतो विनयेन ॥ ८ ॥

केदाररागेण गीयते ॥ २३ ॥

हरिमनुसर सरसिजनयने । कुरु शयनं हरिणा सह सुन्दरि रचितकुसुमशयने ॥ १ ॥ विरहभावसमुदितहृदि तापनिवारणगीतगुणम् । प्रत्यवयवगतनिरुपमसुषमापरिभावननिपुणम् ॥ २ ॥ चिरमवलोकितपदकमलाकृतितरुपल्लवनिचयम् । चिन्तितचरमचमत्कृतिचित्रितदृष्टिरचितविलयम् ॥ ३ ॥ भाववशाशयविहितविनोद-

विशेषविधानविचारम् । भावितरुचिरावयवविलोकनविहितनयनसञ्चारम् ॥ ४ ॥ भावितभवतीपरिरम्भणकृतसम्भ्रमजनितसुखम् । मधुराधरपीयूषपानसम्पुटितसलोलमुखम् ॥ ५ ॥ भावितमानापनयनकरयुगधृतपदकमलवरम् । नखविधुकिरणकौमुदीमोदविनोदविशेषपरम् ॥ ६ ॥ अनुसंहितनिजविरहदशासमुदितमानससन्तापम् । अन्वेषिततनुदाहविनाशकशीतलकमलकलापम् ॥ ७ ॥ शिशिरोपायविधानविहितनिजजन्मसफलविश्वासम् । श्रीवल्लभवरचरणकमलपरिमललोभितहरिदासम् ॥ ८ ॥

कल्याणरागेण गीयते ॥ २४ ॥

मानिनि तव पदपतिताहम् । अङ्गीकुरु गोकुलपतिसङ्गं येन सपदि भविता हरिताऽहम् ॥ ध्रु० ॥ १ ॥ मानय विनयवचनमतिदीनं तव मेलनकरणे सुहिताऽहम् । नैवमुचितमतिरोषवती भवती कृपया दासी विहिताऽहम् ॥ २ ॥ अवलोकयति पथं तव सुन्दरि मानवारणे सखि निहिताऽहम् । इति जानीहि चरणपरिचरणनिरन्तरकरणदोषरहिताऽहम् ॥ ३ ॥ भवतीरतिसम्पादनकृतये निरुपधिगोकुलपतिरचिताऽहम् । यदि नाऽऽयासि वृथेव भवामि तदा निपुणैकमध्यलिखिताऽहम् ॥ ४ ॥ त्यजसि न मानमहो कथमपि तदितरयुवतीभिरतीव जिताऽहम् । यदि न भवति मम विहितमिदं सखि किमु कथयामि मध्यवनिताऽहम् ॥ ५ ॥ वदनामृतकरकिरणचकोरं दर्शय सुखितं भूलुठिताऽहम् । इतरसखीजनसाहङ्कृतिबहुवचनशोचनमृदिताऽहम् ॥ ६ ॥ जीवनमपि मम दुर्लभमधुना यदि निजसङ्गभङ्गगमिताऽहम् । कथमु दर्शयिष्यामि मुखं पुनरपि हरिणा बहुधा लपिताऽहम् ॥ ७ ॥ इति सहचरिवचनानि हृदाऽऽकर्णयति वदति सखि सखि चलिताऽहम् । श्रीवल्लभवरचरणरेणुहरिदासतदीयकृपावलिताऽहम् ॥ ८ ॥

मल्हाररागेण गीयते ॥ २५ ॥

विरहे सुन्दरवर्षासमये। वद जीवामि कथं मम दोषैरतिशयितैरिह सखि विपरीते सदये ॥ १ ॥ वर्षति जलदे विरहानलदे गोवर्द्धनशिखरे। परपुष्टे शतघुष्टं कूजति वदति केकिमुखरे ॥ २॥ लसति भूमिरतिहरितापवनविचलिते तृणनिचये । इन्द्रगोपकैतवनिजमूलविलसदनुरागमये ॥ ३ ॥ विविधशिलासु शुद्धनिजरूपयुतासु विराजति नाथे। निजमुखदर्शनजनितानन्दविलासगीतगुणगाथे ॥ ४ ॥ नवघनमध्यशोभिनी सुमुखि दृश्यते सितबकमाला। मेघनादमनुगर्जति मुरली क्षरति रसं सुरसाला ॥ ५ ॥ उदयति विद्युदतीव चञ्चला चालयतीह जनम्। असितमेघगणविरचिततमसा बहु भीषयति वनम् ॥ ६ ॥ रञ्जितरुचिरकुसुम्भवसनपरिधानविराजितरूपे। गायति मेघसमागमरागे निरुपधिगोकुलभूपे ॥ ७ ॥ इति विज्ञापितमतिशयकरुणे विरहितहरिदासेन। श्रीवल्लभपदकमलपरागधारिणि विरचितवासेन ॥ ८ ॥

श्रीरागेण गीयते ॥ २६ ॥

सततं विचरति वृन्दाविपिने। गोकुलपतिरपि गोपबालकैरारूढेऽपि दिने ॥ १ ॥ निजवदनेन वदति नामानि गवामतिरतिवचनेन। मनसि मोदते विपुलरसागतसरसकुञ्जरचनेन ॥ २ ॥ निर्मलनीरधौतशिखरोपरिरुचिरशिलामुपविश्य । भुङ्क्ते भवनसमागतमन्नं निजगोपेषु निविश्य ॥ ३ ॥ प्रत्यङ्गुलिबहुविविधफलानि दधाति रुचिरहस्ते। मध्यमोदनं तनुते दृष्टिं जननीकृतिशस्ते ॥ ४ ॥ पिबति विमलपानीयं यमुनायामञ्जलिबन्धेन। प्रतिबिम्बं पश्यति सुचिरं निजलोचनसम्बन्धेन ॥ ५ ॥ मृदु वादयति वेणुमतिमधुरं चलति धेनुसङ्गे। हरति तापमथ काननदेशे विरचिततृणभङ्गे ॥ ६ ॥ कनकचषकगतफेनसमूहं पिबति गोपमथितम्। शिशिरयतीह बालकुल-

हृदयं बहुविरहव्यथितम् ॥ ७ ॥ श्रीवल्लभपदकमलपरागरागरञ्जित-हृदयम् । हरिदासं सुखितं भावैरपि कुरु दुर्जनविलयम् ॥ ८ ॥

आसावरीरागेण गीयते ॥ २७ ॥

चरणं धेहि सरसहृदये । व्यथते शिलतृणमूलैरति पदमिति चिन्तैकमये ॥ १ ॥ न हि समुचितमिह धरणिविचरणं सुन्दर सति कमले । उद्भटभावनिरन्तरनिर्गतनयननीरविमले ॥ २ ॥ श्रीरपि कुरुते सपदि सहायं यद्यपि वनचलने । तदपि बाधते मामकहृदयं चरणचिह्नकलने ॥ ३ ॥ यद्यपि भूमिरथो रससहिता त्यजति तथापि हरे । इह यदि गन्तुं क्षणमुत्सहसे करवै सपदि करे ॥ ४ ॥ व्रजसम्बन्धि गवामनुगं किमु गोपीजनवृन्दे । दोषमथो चेतसि चिन्तयसे लौकिकमतिमन्दे ॥ ५ ॥ किमिति बिभेषि तापसंस्पृष्टे धारयितुं चरणम् । फणिफणधृतपदपद्म किमद्भुतमेवं तव करणम् ॥ ६ ॥ मर्दनजनितदुःखमर्दयसि पदा जनितानन्देन । भूमेरहह वियोगे विहितं किमु मयि गोविन्देन ॥ ७ ॥ श्रीवल्लभपदकमलसदागतिसङ्गतगन्धयुतेन । योजय निजचरणं करुणामय दाससरसहृदयेन ॥८॥

आसावरीरागेण गीयते ॥ २८ ॥

मित्र मा याहि करवै पयोमन्थनं फेनमिह भोजनीयं त्वया । पत्रविरचितरुचिरपात्रनिहितं हरे ननु विधेया ममोपरि दया ॥ १ ॥ शीतलं भवति ननु भाव सुन्दर हरे शृणु वने यन्न विहितं मया । किमिति हि विलम्बसे तिष्ठ मम सन्निधौ गोपसुतमण्डलीविहितविनया ॥ २ ॥ दर्शनानन्द गोविन्द सम्प्रति यथा भवति दुःखालिरथ रचितविलया । दृष्टतरनीलमणिमञ्जुमुखलग्नमधुदुग्धकणपरमशोभैकनिचया ॥ ३ ॥ तिष्ठ कथयामि परमद्भुतामथ कथां मयि किमपि मधुवचनमुदितमथ चैकया । मामिह कानने करुणया योजय प्रणतपतिगोकुलाधीश पदसेवया ॥४॥ आयाहि किमपि कथ-

यामि तव कर्णयोरतिशयितगुप्तमथ लोकविरचितभया । मञ्जु कुञ्जे रचय सङ्केतमद्भुतं शीघ्रमहमायामि चरणगतिकृतरया ॥ ५ ॥ वीजयिष्यामि परमतिरमणसम्भ्रमे, दर्शनीयो हरे, भक्तकृपया । योजनीयोऽस्मि तनु, सपदि भवता कदा कार्यकरणे रसिकजननाथसहितया ॥ ६ ॥ दर्शयिष्यति कदा मत्प्रभुस्वामिनीसहसवदनं विहितविपरीतमिच्छया । मदभिनन्दनमथो दत्तमनसा कदाऽऽकर्णयिष्यति सुरतसङ्ग्रामकृतजया ॥ ७ ॥ देहि निजदास्यमिह वल्लभाधीशपदकमलसेवनविहितभक्तिजफलाशया । सततसहितेऽपि हरिदासके करुणतम विलस विपिने सरस नित्यरतिराधया ॥ ८ ॥

माण्डरागेण गीयते ॥ २९ ॥

हा शृणु मा याहि वनम् । किमुचितमिति गमनम् । चारणीयमिह गोपैरभितो व्रजनृप धैनवम् ॥१॥ करवै विविधवसनभूषाभिरलङ्करणं तव देहे । रहसि विराजितविपुलविताने वस मामकगेहे ॥ २ ॥ अतिसुगन्धमुद्वर्तनमतिशयशुद्धगन्धतैलम् । स्नानमथो कुरु तोयैरुष्णैरूरीकुरु चैलम् ॥ ३ ॥ कच्छपटं परिधेहि तिलकमपि वितनु विपुलभाले । तनुमुष्णीषं शिरसि विधेयं ग्रथितालकमाले ॥४॥ नूपुरयुगमतिचपलं पदयोरुत भुजयोरपि धेयम् । कङ्कणचयमथ मध्यमङ्गदं गुच्छसहितमपि देयम् ॥ ५ ॥ हृदयमध्ये मणिमुक्ताजटितं पदकं नाथ विधेयम् । मुक्ताकनकमालिकायुगलं जय जगदखिलमजेयम् ॥ ६ ॥ उपविश पर्यङ्के मृदुरम्ये कुरु सुन्दर शयनम् । तनवै करकृतमङ्गमर्दनं शिशिरीकुरु नयनम् ॥ ७ ॥ इति सरसं वचनं राधाया रतिरसभावयुतम् । शृणु वल्लभवरचरणकमलतलगतहरिदासनुतम् ॥ ८ ॥

सारङ्गरागेण गीयते ॥ ३० ॥

हरिरिह दिवसे वसति वने । गोचारणमपि कुरुते गोपैरभितो

विटपिघने ॥ १ ॥ नैव रोचते किमपि सुमुखि मम हरिविरहित-सद्ने । विरहवह्निरपि तनुते दाहं हृद्ये नृपमद्ने ॥ २ ॥ द्रष्टुमहो कामयते नयनं गोपतनयवद्नम् । अलिकुलसदृशालकततिसहितं मुग्धरद्नम् ॥ ३ ॥ नासा सततं विहितदुराशा देहकमलगन्धम् । आदातुं तस्या ननु तनुते सैव हृद्यबन्धम् ॥४॥ रसना कुरुते सतत-मनोरथमधररसं पातुम् । वागपि परमनुरागवती विद्धाति मनो गातुम् ॥५॥ संवाहयितुमतीव कोमलं पद्कमलं हस्तौ । कुरुते(?) मनसि मनोरथमतुलं हरिसेवाशस्तौ ॥ ६ ॥ स्फुरति सदा संमुख-मतिचपलं चरणयुगं गन्तुम् । चैती(?)श्वरमभिलषिताऽतिकृपापर नित्यमथो रन्तुम् ॥ ७ ॥ इति मामकसर्वस्व वचनजातं निवसतु हृद्ये। श्रीवल्लभवरचरणविचिन्तनरचितविघ्नविलये ॥ ८ ॥

सारङ्गरागेण गीयते ॥ २१ ॥

राधिका जयति वृषभानुभवने । विविधमङ्गलघोषनृत्यगीतादि-युतसूतमागधवन्दिविप्रगायकजने ॥ १ ॥ विविधगृहगोपिकाजनस-मानीतदधिकुङ्कुमाक्षतरचितभित्त(?)हस्ते । रेणुदूरीकरणगन्धजलसे-कक्रततोरणध्वजपताकादिशस्ते ॥ २ ॥ निकटसम्बन्धिनिजनन्दप-रिचितसकलगोकुलागतमनुजविहितमाने । पुत्रिकाजननसन्तोष-जनिनिजजनकविहितभूषणरत्नवस्त्रदाने ॥ ३ ॥ रतिपथप्रकटनोपा-यसम्भवजनितहर्षयुतदासिकाफलितभाले । निजनाथलीलया ली-नसकलेन्द्रियगीति गोपिकादत्तताले ॥ ४ ॥ उद्घटितवद्नजलजात-सञ्जातपरमानन्दद्दष्टराधैकवद्ने । गोकुलाधीशजननोत्सवप्रतिपद्-स्मरणचिन्तितरुचिरनन्द्सद्ने ॥ ५ ॥ सततमिह विलसतु प्राणप-तिनेति चिरमाशिषामधिकतममधुवचनभाषिते । हृद्यकमले वसतु भावपरिपोषितस्वामिनीसङ्गनिर्धारणविकाशिते ॥ ६ ॥ अस्मद्भि-मतमखिलमत्र खलु सिद्धमिति तोषभरभरितनिजदासचित्ते ।

अतिशयितदुर्लभाभरणभूषितलब्धजन्मसमयोत्सवप्रेष्ठचित्ते ॥ ७ ॥ भवतु वल्लभविभोरतिशयितकरुणया सपदि वासोऽपि तव चरणरेणौ । दासदासस्य हरिदासकस्याऽधुना देहि भावं भगवति विधृतवेणौ ॥ ८ ॥

आसावरीरागेण गीयते ॥ ३२ ॥

पृथुके पश्यति मातृमुखम् । जन्म सफलमिह मनुते जननी लभते विविधसुखम् ॥१॥ उन्नतनयनमर्धमुत्थितवति सचकितनयनयुगम् । स्रवदधरामृतवदनकलशे फुल्लकमलसुभगम् ॥ २ ॥ कुटिलालकसङ्कुलमुखकमले हृदयभावविमलम् । नखरसमीकृतकुञ्चितचिकुरे नयननीरसजलम् ॥ ३ ॥ आदर्शोदितबालकरूपे द्वयदर्शनचपलम् । प्रतिबिम्बाकारणकृतलीले नर्तितकम्बुगलम् ॥ ४ ॥ अवलम्बितमुक्ताफलभाले स्पृष्टरुचिरभालम् । नृत्यति नवनीताय चञ्चले चपलालकमालम् ॥ ५ ॥ करधृतमातृनासिकाभूषे मोदरोमहर्षम् । वदनोपरि परिवर्तितवदने रचितनीरवर्षम् ॥ ६ ॥ दशनद्वयदर्शितरसभावे भावनकृतिसरसम् । अवलोकितगोपीजनवृन्दे तद्दर्शनसहसम् ॥ ७ ॥ श्रीवल्लभकृपया मयि कृपयतु वल्लवकुलरत्नम् । भवतु मानसं सपदि निरुद्धं विविधविषयरत्नम् ॥ ८ ॥

रामकरीरागेण गीयते ॥ ३३ ॥

निजतनुजं जागरयति माता । प्रियसुत जागृहि रजनी याता । सुशृतपयोनवनीतबद्धदधिमोदकादिशीतलता जाता॥१॥ मधुरं रौति पक्षिगण(?)मथ विकचीयति कमलकुलम् । दधि मथ्नन्ति गोपिका भुजकङ्कणविध्वनिविपुलम् ॥२॥ वायुरसावावाति समीविदधातु(?) मलकनिचयम् । उन्निद्रय निजनयनयुगं कुरु रजनिदुरितविलयम् ॥ ३ ॥ उदयति भानुरसौ परिहसति विकचकमलव्याजेन । किमिदमुरीकृतमधुना शयनं नन्दभवनराजेन ॥ ४ ॥ गायति गोपम-

ण्डली सम्प्रति बालयशो विमलम् । दर्शय वदनविफुल्लसरोजं रचय जन्म सफलम् ॥५॥ कमलविनिर्गतमधुपकुलानि मधुरतरगलरणितानि । हरिरुत्थित इति जगति वदन्ति बहूनि मया गणितानि ॥ ६ ॥ पूरय निखिलमनोरथमिति निजजननीमधुवचनम् । सुहृदाकर्ण्य तथैव कृतं हरिणापि यथारचनम् ॥ ७ ॥ श्रीवल्लभपदकमलमधुपमानसवति युत(?)हरिदासे । कृपय सदैव मदीयवचनतो वर्णितसुगुणसमासे ॥ ८ ॥

अडाणारागेण गीयते ॥ ३४ ॥

नृत्यति गोकुलपतिरद्भुतगति धेनुवृन्दसङ्गे । अवलोकय वेणुवादविरचितगतिभङ्गे ॥ १ ॥ अभिनयसंशनाय(?) दर्शितभुजमूलम् । तनुते ननु सहचरि वरहस्तकमनुकूलम् ॥ २ ॥ नयनभेदवेदनाय मुग्धस्मितवदनम् । बहुविलासहासकरणदर्शितसितरदनम् ॥ ३ ॥ सम्पुटीकृतरदनच्छदसूचितरसपानम् । वेणुनादकथितनामनिश्चितफलदानम् ॥ ४ ॥ चारीकरणाहितपदधरणितापहरणम् । प्रकटितरसगोपनाय पीतवसनवारणम् ॥ ५ ॥ कोटिमदनमोहनाय चलितकटिविलसितम् । क्षुद्रघण्टिकामनोहरनादमधुररसितम् ॥६॥ मन्दमन्दमञ्जुलगतिवारणवरचलनम् । ग्रीवाकटिचरणकमलवनमालाललनम् ॥ ७ ॥ सन्ध्यासमयागतिरिह सुखयतु हरिदासम् । श्रीवल्लभचरणकमलभावमतिविलासम् ॥ ८ ॥

सारङ्गरागेण गीयते ॥ ३५ ॥

बालमालापयति मुग्धललितम् । तात मातेति वद विस्खलिततरसनया सुखय मम हृदयमतिभाववलितम् ॥ १ ॥ अङ्गुलिं मम गृहाणोत्तिष्ठ सादरं दर्शय प्रायशो विविधचलितम् । मधुरमधुरं सपदि वेणुमपि वादय प्रतिपदं मधुरकरकमलकलितम् ॥ २ ॥ पश्य दर्पणगतं निजरूपमद्भुतं तदनुकरणं वितनु परमवस्त्रवलितम् । अति-

भारपीठकोलूखलसमर्पणे भुजयुगलमपि कुरु विशेषवलितम् ॥ ३ ॥ कमलपद् लोचनं दुःखचयमोचनं मदभिमुखमातनु सदा विरलितम् । बालभावेन गानेन सुस्वरतया व्रजभुवि विधेहि ननु नृत्यच्छलितम् ॥ ४ ॥ अञ्जनं नयनयोरतिशयितशोभनं तव ददामीह करयुगलदलितम् । सजलचैलेन संप्रोछ्य तैलेन सह मुखविधुं सपदि करवै विमलितम् ॥ ५ ॥ पिब पयो ननु वयो वर्द्धते येन तव मस्तकं भवति न कदापि पलितम् । दृष्टिविषयो भवति मम कदा जलद इव दुग्धकणनिचयमथ मुखविगलितम् ॥ ६ ॥ नयनयुगलं कदा दधिदुग्धयाचने बाललीलानुतति सजलितम् । दर्शयिष्यति सकलगोकुलविमोहनं भागधेयं भवति मम च फलितम् ॥ ७ ॥ विषयविवशाशयं विस्मृताधीशमपि भक्तिपथभावभावनममलितम् । देहि हरिदासमिह निजचरणवासमपि वल्लभाधीशपदकमलललितम् ॥ ८ ॥

बिलावलरागेण गीयते ॥ ३६ ॥

व्रजयुवति देहि मम लगति दानम् । चित्रितदधिकलशमाधाय मस्तके चलसि विपिने हरसि मत्तगजमानम् ॥ १ ॥ श्रुतिपथं नहि गतं कुत्र तव दानमिति किमिति हि मृषा वदसि विनयहातम् । अधर एवेति सविकारणभाषिते गोपिकाधीश इह वचनजातम् ॥ २ ॥ कथमु गृह्णासि मम बाहुमाहूत इव कुलयुवतिधर्षणं किमिति तनुषे। एवमेवेति जग्राह करयुगलमधुनापि कुलयुवतितामहह मनुषे ॥ ३ ॥ सहचरीवृन्दमपि पश्यति अपत्रप त्यज हठविहितमपि शिरसि भारम्। चल रहसि मस्तकेनैव किमु वहसि सखि भारमुत्तारये तव वृथाऽरम् ॥ ४ ॥ यतिकुटिललकुटेन शिरसि स्थितं दधिकलशमतिरभसभावभारे । निजपतौ विपिनरतिपरमतौ संमुखं वदति नहि समुचितं विजितमारे ॥ ५ ॥ चरणयुगलमतिमृदुलमहह ललिताकृति प्रिय वहिष्यामि शिरसैव सततम् । बालभावं जहिहि सरसमनसा

परं तव जगति भवति न यशो विततम् ॥ ६ ॥ इति निजप्रियतमावचनमुपश्रृण्वतो गोकुलेशस्य मुखकमलशोभा । दर्शनेनैव कुरुते सखि मानसं भावनतरङ्गितं जनितयशोभा ॥ ७ ॥ मनसि रसिके वसतु वागविषयं हरे गोपरमणीजने दानचरितम् । वल्लभाधीशपदकमलयुगकरुणया मम मनो विदधातु भावभरितम् ॥ ८ ॥

ललितरागेण गीयते ॥ ३७ ॥

जहि जहि भामिनि मदुपरि कोपम् । अहमिह सपदि पतामि पादयोरुपरि किमिति कुरुषे रतिलोपम् ॥ १ ॥ मुखकमलं मम विरचय संमुखमपि शिशिरीकुरु नयनम् । न मया सशपथमभिमतया कृतमन्यगृहे शयनम् ॥ २ ॥ फुल्लनयनयुगलेन विधेहि कोपवति करुणालोकम् । त्वदवमाननवितानजनितमपहर मम मानसशोकम् ॥ ३ ॥ करयुगलं मम शिरसि निधेहि देहि सततमभयम् । हैयङ्गववस्तुकुमारतरं सखि कुरु मानसमतिसदयम् ॥४॥ गोपनितम्बिनि किं बलमीदृशमतिदीने तनुषे । ममशरणं न करिष्यति कापि युवति रतिश्चेतसि किमिति मनुषे ॥ ५ ॥ निजपतिनातिविषममतिना विनयेन सखि मानम् । हृतमखिलं हृदयं च ततं करुणायुतरतिरसभानम् ॥ ६ ॥ रमणभुजालिङ्गनचुम्बननखदशनादिविधौ । न खलु वेद निजपरभेदपतिता रतिरमणनिधौ ॥ ७ ॥ श्रीवल्लभचरणस्मरणाहृतभावहृदा सरसेन । कथितमिदं हरिचरितं हरिदासेन सदा सरसेन ॥ ८ ॥

सारङ्गरागेण गीयते ॥ ३८ ॥

राजते हरिरसौ कुसुमभवने । गोपिकाकरयुगलचातुरीमीक्षमाणो मनसि मोदते वहति पवने ॥ १ ॥ प्रेष्ठया सहगतो विहरति विशेषतो हृदि च परिधापयति कुसुमहारम् । स्पृशति हृदयं मिषेणैव कौतुकपरो परमरमणीयमतिगन्धभारम् ॥ २ ॥ विरचयति

भूषणानीह कुसुमैरथो राधिकापरिधापनेति यत्नम् । शोभते पुष्पकृतभूषणविभूषितो राधया सह युवतिहृदयरत्नम् ॥ ३ ॥ अतिसूक्ष्मसितवसनपरिधानफलितनिजदेहसुषमादमितमारगर्वम् । प्रेयसी हसति च सलक्षणं चन्द्रमिव हृद्यहासद्युति सुदृष्टिखर्वम् ॥ ४ ॥ करयुगं बध्नाति कुसुमहारेण च कदाचिदपि वदति मानय विलासम् । नेति नेतीति मधुवचनमाकर्णयति वदनकमलं स परिचुम्बति सहासम् ॥ ५ ॥ हरिगले परिहितं हारमाकर्षयति बोधयति नायकं युवतिवश्यम् । अधरमधुपानकृतिलोभलोलुपमुखं गोपिकावदनकमलैकपश्यम् ॥ ६ ॥ हारमिव लापयति हृदयदेशे हरिः प्रेयसीमपि च जिघ्रति मुखमोदम् । गाढमालिङ्गति तदिङ्गितं वेदयति हर्षसहितोऽपि तनुते विनोदम् ॥ ७ ॥ पूरयतु सकलमपि मम मनोरथमहो दर्शयतु कुसुमगृहयुगलवासम् । वल्लभाधीशपदसरसिजे सर्वदा देहि गोपीपते सुदृढविश्वासम् ॥ ८ ॥

सारङ्गरागेण गीयते ॥ ३९ ॥

गोपकुलतिलक इह गोकुले समभवन्निजजनानन्ददानाय दयया। सकललोचनयुगलगोचरो रमणकृतिचरितया वसुदेवनीतया मायया ॥ १ ॥ जातकर्माचरणवेदबोधितकरणनीलरत्नगिरिविहितविप्रसन्माने । पुत्रजननानन्दनन्दहृदयानन्दसन्दोहविहितबहुधेनुदाने ॥ २ ॥ उज्ज्वलीकृतगृहे बद्धबहुतोरणे तैलयुतरजनीकृतधेनुशृङ्गारे । विविधवसनाभरणगोपसुसमानीतदधिदुग्धवरवसनविलसदुपहारे ॥ ३ ॥ कृष्णजननश्रवणविरचितस्वाकल्पकरविधृतबलिगोपिकासमाजे । नन्दभवनागमनजातसन्तोषभरविरचिताशीराशिगोपराजे ॥ ४ ॥ चित्रविधवादित्रघोषसङ्गीतयुतनृत्यचारणबन्दिगुणविकासे । दधिदुग्धसेकसंजातपरमानन्दगोपगोपीनृत्यगतिविलासे ॥ ५ ॥ विप्रगायकबन्दिसम्बन्धिजनतोषनन्दवितरितवसनरत्नमाले । सूनुस-

मुदयकृते विष्णुसन्तोषाय नन्दपरिपूजितग्रहदेवजाले ॥६॥ रोहिणी नन्दगोपाभिहितनिर्भया व्यचरदाभूषणा गेहकृत्ये । गोकुलेशागमनसततकमलावासपरमसम्पत्तियुतभृत्यभृत्ये ॥ ७ ॥ वल्लभाधीशकेवलसमाश्रयमात्रदासहरिदासजनशुद्धहृदये । प्रकट इह भवतु भवभावभञ्जनपरो निरुपधिकृपाकरो दोषनिचये ॥ ८ ॥

धनाश्रीरागेण गीयते ॥ ४० ॥

मयि दीने तु दया करणीया । शरणनित्यता हृदि धरणीया ॥ १ ॥ निजपदकमलयुगलकृतशरणे । सन्ततविहिताविहितविचरणे ॥ २ ॥ साधनमतिकृतनिजपथहाने । फलसम्बन्धविरोधसमाने ॥ ३ ॥ विफलमृषामददत्तमानसे । विठ्ठलविभुसेवैकलालसे ॥ ४ ॥ इन्द्रियविषयचिन्तनाविमुखे । मूढतया पालितविषयसुखे ॥ ५ ॥ कामसमूहविभावनदक्षे । विषयसुमुखकालादिकभक्षे ॥ ६ ॥ दुर्जनसङ्गकरणमतिदुष्टे । बहुविधदोषपोषपरिपुष्टे ॥ ७ ॥ असमर्पितभक्षणशत(?)शुद्धौ । पररामासङ्गमहतबुद्धौ ॥ ८ ॥ परिजनजनितहासगतनासे । श्रीवल्लभपदसरसिजदासे ॥ ९ ॥

गौडीरागेण गीयते ॥ ४१ ॥

सखि विपिनादधुनैवाऽऽयाति । श्रूयत एव मुरलिकानादो वदनामोदवायुरावाति ॥१॥ झंकृतिरपि वनमालामधुपकृता कुरुते हृदि मोदम् । गोपालंकृतिरतिशयमधुरा विदधाति विशेषविनोदम् ॥ २ ॥ गावो गोपा बलभद्रोऽपि समायाता निजगेहम् । एकलमेव मिलिष्यामो मधुराकृतिकोमलदेहम् ॥ ३ ॥ चलनीयं मिलनीयं हरिणा रमणीयाकृतिना सुचिरम् । श्रवणीयं वचनामृतनिचयं करणीयं हृदयं शिशिरम् ॥ ४ ॥ सामग्रीमथ निजसङ्गे विविधामपि नयननवीनम् । कुरुत मनोरथचयमपि सफलं द्रुतमभिसरत सखीनम् ॥ ५ ॥ विरहदहनजनितं परितापं शमयत मृदुलकरेण । परिरम्भ-

णमपि तनुत चिरं सुखमनुभवतातिभरेण ॥६॥ वसतु सदा हृदये रसवियुत(?)युवतीवचनम् । भावभरं गोवर्द्धनधरणे वितरतु कृतरचनम् ॥ ७ ॥ हरिदासेन सदा हरिवल्लभचरणरेणुवित्तेन । जल्पितमिदं न्यधीयत हृदये विरहविकलचित्तेन ॥ ८ ॥

श्रीरागेण गीयते ॥ ४२ ॥

किं त्वया कृतमदर्शनेनैव मम रोचते नैव भवनम् ॥ १ ॥ न त्रपा कापि निजपरजनेभ्योऽपि मम कैव पदमपि च विद्धातु गमनम् ॥ २ ॥ कुरु वचनपीयूषवर्षणेनैव मम हृदयगतविरहजनिताग्निशमनम् ॥ ३ ॥ इति निजस्वामिनीसरसवचनम् । सपदि वितनोतु निजमनोदोषदमनम् ॥ ४ ॥

श्रीरागेण गीयते ॥ ४३ ॥

जय राधिके जय राधिके सततं सह हरिणा ॥ १ ॥ निजरमणेन सदा रमणं कुरु युवतिरतिकरिणा ॥ २ ॥ अवलोकनजनितानन्देन च सुखय सखीनयनानि ॥ ३ ॥ पल्लवकुसुमसमूहकृतानि हि सफलय वनशयनानि ॥ ४ ॥

श्रीरागेण गीयते ॥ ४४ ॥

जयति रूपगुणशीलसुषमाधिका मुख्यतररमणरति विलसितस्वामिनी राधिका ॥ १ ॥ केतकीकुसुममदमानहरणाधिका देहविद्युतिवशीविहितसर्वाधिका ॥ २ ॥ नन्दभवनानन्दसुरतसुखसाधिका । गोपिकाधीशहृदि विरहभरबाधिका ॥ ३ ॥ सर्वभावैकमतिपोषजबलाधिका । भूतले कापि युवतिर्यतो नाधिका ॥ ४ ॥ निजनाथ नित्यसंयोगशोभाधिका ॥५॥ हरिदासजनसत(?)शरणविषयाधिका । वसतु हृदये चरणरेणुसङ्गाधिका ॥ ६ ॥

श्रीरागेण गीयते ॥ ४५ ॥

सखि गावो गोकुलमायाता हरिरुपयाति वने । नृत्यति गायति

वेणुं रणयति जनयति सुखमनुकूलजने ॥ १ ॥ वनमालामधुपैर-
प्यलङ्कृतमति सादरमाकर्ण्य भृशम् । उद्गायति बोधयति निजाग-
मनमपि निजदिवसवियोगकृशम् ॥ २ ॥ चञ्चलनयनयुगं चालयति
विशेषरसाभिनयेन । जनयति परमसुखं कटितटगतभावरसातिश-
येन ॥ ३ ॥ विविधविलासगतिं तनुते कमलं भ्रामयति करेण ।
मुहुरनुपश्यति वनमालामपि हृष्यति भावभरेण ॥ ४ ॥ चलति
कदाचिदमन्दमन्दगति करिण इव धरणीदेशे । स्वयमपि विस्मयर-
समनुभवति विचित्रितनिजवेशे ॥ ५ ॥ सखि सूचयति सरागदृशा
रजनीरमणीकरणीयम् । चपलदृगन्तशरैरपि विध्यति युवतिमनोह-
रणीयम् ॥ ६ ॥ कुटिलालककुलसङ्कुललपनं पश्यति विपिनाया-
तम् । चलति चतुरहृदया हरिसंमुखमपि हृदयेऽति विभातम् ॥७॥
श्रीवल्लभपदकमलरेणुसेवनमानसगतिना । हरिदासेन निरूपितम-
खिलं जयति सरसमतिना ॥ ८ ॥

श्रीरागेण गीयते ॥ ४६ ॥

गोकुलानन्दवनविपिनविहितम् । करयुगेनातिकोमलकपोलद्वयं
प्रोञ्छति वदति जननी सुतहितम् ॥ १ ॥ मम दृशोरायाति कृशतमं
वदनमिह घर्मसम्बन्धिजलबिन्दुसहितम् । भुङ्क्ष्व पयसौदनं सुखय
मम मानसं कृपय हरिदासमपि भजनरहितम् ॥ २ ॥

श्रीरागेण गीयते ॥ ४७ ॥

कीदृशं दानमिह लगति तव गोरसे । जहिहि हठमीदृशं याहि
भवनम् । किमिति गृह्णासि ननु वसनमतिकोमलं प्रथममथ याति
विक्रयणसवनम् ॥ १ ॥ दधिकलशिका पतति लकुटविभ्रामिता नैव
समुचितमिदं युवतिकदनम् । व्रजराजदुर्ललितललितसूनो सदा
मदुदितैरपि वितनु निजसमवनम् ॥ २ ॥

श्रीरागेण गीयते ॥ ४८ ॥

वन्दे राधामृदुलपदम् । गोपीभावविभावितभावरूपपदकमल-

भावशुभदम् ॥ १ ॥ निरुपमसुषमाहृतनवकुङ्कुमचम्पककेतकिकुसुममदम् । सन्ततसेवनसरसहृदयं सञ्जातभावसेवाफलदम् ॥ २ ॥

कल्याणरागेण गीयते ॥ ४९ ॥

सुन्दरि देहि गोरसदानम् । लगति न गतिरुचिता तव सुभगे कुरु मयि पुरुसन्मानम् ॥ १ ॥ बलमबलासु कथं कुर्मो नहि नर्मवचनमिति कुरु विज्ञानम् । भवदाशाबद्धा निवसामो विपिने विपुलय यशोवितानम् ॥ २ ॥

कल्याणरागेण गीयते ॥ ५० ॥

वसति मनो मम हरिचरणे । गुरुजनशिक्षणमतिलक्षणमपि न भवति हेतुरखिलकरणे ॥ १ ॥ नहि जानामि कृतं किमिदं मम तरलदृगन्तपातवरणे । नयति चित्तमथो गुणलग्नं रूपनिमग्नं गिरिधरणे ॥ २ ॥ प्रतिविपिनं सङ्गे सखि यामि भयं न काननतरणे । रसिकशिरोमणि सरसवचनमाकर्ण्य किमत्र गेहभरणे ॥ ३ ॥

कल्याणरागेण गीयते ॥ ५१ ॥

कापि युवतिरतिचतुरा वशीकुरुते गोपीशम् । मदनविमोहननयनचलनचञ्चलितसकलरमणीशम् ॥ १ ॥ नियोगपाशविरचितरुचिरवेषशोभायुतो विदधाति निजधेनुदोहम् । कुटिलकुन्तलमधुपकुलसमाकुलवदनकमलदर्शनजनितजनमनोमोहम् ॥ २ ॥ चपलतरनयनयुगचालनेनैव गोपीवशीकृति विहितभक्तसङ्गे । भवतु भवभयहृतौ वेणुवादनकृतौ विहितगिरिवरधृतौ रतिरनङ्गे ॥ ३ ॥ गोपिकाकरकमलकलितललिताकृते रतिपते नित्यमायाहि गेहम् । बहुविविधभूषणादिभिरलङ्कृतियुतं तुभ्यमिममर्पये देव देहम् ॥ ४ ॥ रसिकवररुचिकरं निर्जितामृतभरं वितर रसमधरमधु मधुरलेहम् । अन्यदर्शनरहितसततसरसैकहितनित्यसहभावमिह कृष्ण चकमे(?)-ऽहम् ॥ ५ ॥

कल्याणरागेण गीयते ॥ ५२ ॥

भामिनि मानय मम विनयम् । आकर्णय हरिणा यदभिहितं रसवचनं सदयम् ॥ १ ॥ द्रुतमायाहि मया सह सुन्दरि मा कुरु गुरुजनजनितभयम् । रमय निकुञ्जे मधुकरगुञ्जे नन्दसूनुमानन्दमयम् ॥ २ ॥ किमिति वृथा समयं यापयसि रहसि मिल वितरतु विरहविलयम् । हरिदासे वल्लभवरदासे देहि चरणयुगरेणुचयम् ॥३॥

कर्णाटकरागेण गीयते ॥ ५३ ॥

गायति गोपी हरिचरितानि । यानि कृतानि निकुञ्जे हरिणा विरहे सहचरितानि ॥ १ ॥ ध्यायति मीलितलोचनयुगला रतिरसभरभरितानि । मुहुरनुमनुते चित्रितमनसा सखि सर्वोपरि तानि ॥ २ ॥ पश्यति विटपिलताभवनानि हृदा पल्लवहरितानि । मनुते दोषं तनुते तापं गुञ्जितमधुकरितानि ॥ ३ ॥ भावभरेण पदा निदधाति च नूपुरविमुखरितानि । निजमिलनं भावयति तनोति सुरतगतनागरितानि ॥ ४ ॥

कर्णाटकरागेण गीयते ॥ ५४ ॥

चल सखि हरिणा मिल सदने । पल्लवकुसुमविनिर्मितशयने कुरु शयनं विधुवदने ॥ १ ॥ अनुकम्पय परमादरणीये निजदेहद्युति जितमदने । विहस सरसवचनानि निशामय शमितविरहकदने ॥ २ ॥ लग कण्ठे नवभेदविरहिता रतिकूजितसदने । अधररसं पिब चुम्ब कपोलं विजितकुन्दरदने ॥ ३ ॥ पयसामपि वीजितसमये दयितदयितगदने । सुखमनुभव भव सुभगा सततं सरसरदच्छदने ॥ ४ ॥

कर्णाटकरागेण गीयते ॥ ५५ ॥

सुमुख मदग्रे वेणुं वादय । रूपं ललितत्रिभङ्गं प्रकटय मम हृदयं सदयं परिमोदय ॥ १ ॥ वनमालागतकुसुमतुलसिकामधुमत्तालि-

कुलं संनादय। मनुजपक्षिपशुसुरसंदोहं जनितानन्दभरं सम्पादय ॥ २ ॥ बाललीलया गोपगृहेषु विहरणे निजरसचरितं छादय। गोपीजनवल्लभ इति रुचिरं नाम रहस्यं जगति निगादय ॥ ३ ॥

कर्णाटकरागेण गीयते ॥ ५६ ॥

मम वेणुं वादय राधे। श्रुतियुगलं पूरय नादेन विशेषितविरहहृदयबाधे ॥ १ ॥ अहमपि युवतीभारभरेण दृशा पश्यामि मुखम्। भुजयुगलेनाऽऽलिङ्ग्य च गाढं बहु विन्देय सुखम् ॥ २ ॥ निखिलं मामकवेषं विरचय रचयेऽहमपि युवतिवेषम्। वदनकमललावण्यरसाद्यं सपदि पिबामि विरहपेयम् ॥ ३ ॥ करवै निजसम्बन्धानुभवं तनुवै तव च यशोविस्तारम्। ऊरीकुरु दूरीकुरु मानं वितनु मनोरथचयनिस्तारम् ॥ ४ ॥

कर्णाटकरागेण गीयते ॥ ५७ ॥

रहसि जपति सखि राधानाम। सकलसुभगतमरूपं ध्यायति तव सुन्दरताधाम ॥ १ ॥ गायति गुणगणमपि फलसिद्ध्यै सकलनिगमगणसारसाम। परिरम्भितुमुत्सहते सततश्रीमदुरोमालतिकादाम ॥ २ ॥ बाललीलया देहि सुखम्। मृगमदतिलकमलकलसद्लिकं दर्शय कृतलीलसुमुखम् ॥ ३ ॥ कुरु नृत्यं पीठं च समानय गीतं गाय मधुरनादेन। परिरम्भय लम्भय सुखरूपं विलस वेणुवादेन ॥ ४ ॥ मुग्धभावकृतमधुराराव सपदि परिधाव सहजचपलम्। उपरिनिपत निःसहमनुकूलं देहि दयाभर विहितफलम् ॥ ५ ॥ मंक्षु मदभिमुखमायाहीह हरे सुन्दर पश्यामि गतिम्। उपविश मृदुले नाथ मदङ्के सम्भाषय जाने सुमतिम् ॥ ६ ॥

यमनरागेण गीयते ॥ ५८ ॥

ललितमुरलिकाकलनिनदम्। मधुराधररसयुतमनुभावय श्रावय श्रुतिसुखदम् ॥ १ ॥ नीलजलदगर्जितमनु कुरु कुरु नृत्यदिवेह

१ अत्र किंचिद्वाक्यार्धं त्रुटितं भाति।

पदम् । मन्दमन्दमायाहि सुमुखं हर गजराजपदम् ॥ २ ॥ विहस वदनकमलं परिफुल्लकपोलयुगं दर्शय सुरदम् । चरणसरोजं शिरसि निधेहि वियोगतापशिवदम् ॥ ३ ॥ मृदुलकरं हृदये धारय वारय विरहं हरि रतिरसदम् । छादय बाललीलया निखिलं प्रकटय निजजयदम् ॥ ४ ॥

यमनरागेण गीयते ॥ ५९ ॥

त्वमसि मम राधिके जीवनधनम् । मैव मानं वितनु दहति मामतनुरपि समयतापं च हर विरहनिधनम् ॥ १ ॥ त्वदनुकम्पादर्शं वल्लभे मयि विना रोचते नैव मम कुसुमभवनम् । मैव मामेकलं सततमपि शीतलं शिशिरयति पुलिनमपि शिशिरपवनम् ॥२॥ कृपय मयि नित्यदयिते विलस सह मया लीयते तव दया नैव माने । पीयूषनिर्मितामपि मदनसिद्धिदामानन्ददायिनीमहमहो जाने ॥ ३ ॥

यमनरागेण गीयते ॥ ६० ॥

राधे मयि जहि कोपम् । अतिदीने सततं त्वदधीने वितनु विरहलोपम् ॥ १ ॥ पदपतिते शरणं गतवति मतिचतुरतरे परिहर मानम् । रसलुब्धे विरहक्षुब्धे सखि देहि महारसदानम् ॥ २ ॥ दोषयुते रसदोषयुते बहुबोधमते दण्डय सर्वम् । नन्दसुते सकलाधिपतावपि दूरीकुरु गर्वम् ॥ ३ ॥

यमनरागेण गीयते ॥ ६१ ॥

स्मरसि किं राधिके रतिविलासम् । मम वसनभूषणादिकमखिलमपि धृतं सुरतपुरुषायिते जनितहासम् ॥ १ ॥ विच्छुरितकेशमतिशयितसुन्दरवेषमानन्दनिश्वासहृदयदेशम् । गाढमालिङ्गनाभेदनिगमस्मृतिं तूलसदृशीविहितमुक्तसुखलेशम् ॥ २ ॥ उभयसारूप्यकृतकैवल्यबोधनं विरहभरशोधनं कामपूरम् । जनितलज्जाभरं नमितमुखसारसं विहितनिरुपमरसं दुःखदूरम् ॥ ३ ॥

यमनरागेण गीयते ॥ ६२ ॥

मनसि विचारय चारुतरे। किमुचितमिदमभिमतकरणं सखि धृतगिरिराजवरे ॥ १ ॥ कुरु विनयं मानय मम वचनं वेणुविराजितकमलकरे। विलस विद्युदिव विद्युति नीलिमशोभितनीरधरे ॥२॥ एकीभव परमानन्देन महारससुरतं देहि दुरापम्। किमिति वृथा कुरुषे समयक्षयमभिसर जहिहि विलापम् ॥ ३ ॥

यमनरागेण गीयते ॥ ६३ ॥

चिन्तय चेतसि हरिचरणम्। सहजशिशिरमतिशयितशोभनं विरहतापहरणम् ॥ १ ॥ गगनोपममपि नखविधुसहितं विहितसकलवरणम्। प्रणत देहिजनपापकर्षणं भवसागरतरणम् ॥ २ ॥ मदननृपतिजयकृतिशीलं रतिगतिलीलं सुखभरणम्। विकसदिन्दिरामन्दिरमपि निजसेविसकलकरणम् ॥ ३ ॥

केदाररागेण गीयते ॥ ६४ ॥

एहि परिधेहि नीलवसनम्। ग्रन्थय वेणीमेणीनयन रोधय वदनविहसनम् ॥ १ ॥ शीलय शिरसि सकलश्रृङ्गारं सफलय कुसुमविकसनम्। विविधमहामणिजटितभूषणै रूषय कुञ्जविलसनम् ॥ २ ॥ किमु गृह्णासि वियोगभरेण मुखेन महानिःश्वसनम्। द्रुतमभिसर मा कुरु लघुगत्या क्षुद्रघण्टिकारसनम् ॥ ३ ॥

शङ्कराभरणरागेण गीयते ॥ ६५ ॥

पङ्कजनयने पल्लवशयने विलस लताभवने। कूजति पिकसमुदाये मधुरं वहति मलयजपवने ॥ १ ॥ कुसुमविकासे हरितविलासे मृदुमधुकरगुञ्जे। मदनविबोधसाधने सुन्दरि प्रकटितरसपुञ्जे ॥ २ ॥ गमनविलम्बं मा कुरु मानिनि दुर्लभतमगोकुलपतिसङ्गे। नीलजलदसुषमामदहरणे रमय हरेरङ्गे ॥ ३ ॥

केदाररागेण गीयते ॥ ६६ ॥

कथमु जहाति राधिका मानम्। मामिह वद सहचरितमुपायं

देहि जीवदानम् ॥ १ ॥ विषमवियोगरोगतापं हर वितर रसौषधि-पानम्। शुष्यति मुखमधुरासवपानं(?) मतर(?)रूपनिधानम् ॥ २ ॥ किं जाने परिणामे भविता रक्षति गुणगानम्। यदि मयि कुपयति नैव राधिका प्रभवति विरहवितानम् ॥ ३ ॥

केदाररागेण गीयते ॥ ६७ ॥

कथं जीवामि राधिकारोषे। विध्यति पञ्चशरोऽपि शरैरिह मयि विरचितदोषे ॥ १ ॥ नहि पश्यामि कुत्र सखि यामि विरहकृतदङ्मोषे। न लगति कोऽपि कृतोपायोऽपि परमविरहज्वरपोषे ॥ २ ॥ न भवति कथमपि मम निस्तरणमसति तदतुलतोषे। अधररसेन विना जानामि कथं मुखविधुशोषे ॥ ३ ॥

केदाररागेण गीयते ॥ ६८ ॥

मयि मानेन किमायातम्। सुन्दरि कथय करे। अनुभूतं सखि बहुधा दुःखं मनसि विनोदभरे ॥ १ ॥ किमु पारुष्यमीदृशं कुरुषे पदपरिचरणपरे । भवति कथं कमनीयविवेको वृन्दाविपिनचरे ॥ २ ॥ अगतिकगति मानसमिदमखिलं सज्जति लसदधरे । क्षण-मपि नहि शक्नोमि विरहितुं त्वामभिमानधरे ॥ ३ ॥ विस्मारय निजकृतमपराधं साधय चतुरतरे । रतिमतिशयरसभावविभावितहृदयसरोजवरे ॥ ४ ॥

केदाररागेण गीयते ॥ ६९ ॥

चिन्तये राधिकाचरणकमलम्। यदवलोकनजनितविविधसुख-मन्तरा भवति परमायुरपि जन्म विफलम् ॥१॥ विजितकलहंसगति सुमति विधुसेवितं मञ्जुमञ्जीरनिनदातिसरलम्। तलभागगतराग-सुषममङ्गुलिदलैरावृतं वरणकृति सहजतरलम् ॥ २ ॥ मिलितुमुत्क-पठतेऽधैर्यमवलम्बते मामकं मानसं प्रकृतिचपलम्। सखि वितनु सङ्गमं जन्म दुर्लभतमं राधया शमय मम मदनजनितानलम् ॥३॥

विभासरागेण गीयते ॥ ७० ॥

मृदुलकपोलयुगे तव चिह्नं किमिदं वद मदनाधिकसुन्दर । प्रकटमञ्जनं नयने भाले कुङ्कुममपि गोगोपपुरन्दर ॥ १ ॥ वसनं शिथिलमथो शिथिला गतिरतिजृम्भा नयनं सजलम् । सक्षतमधरं सनखं हृदयं स्खलितं वचनं रतिविकलम् ॥ २ ॥ सहसं वदनं प्रकटितरदनं मधुराधरयुतनिःश्वसनम् । व्यथयति मामखिलं तव रूपं याहि विधेहि तयैव विलसनम् ॥ ३ ॥

विभासरागेण गीयते ॥ ७१ ॥

वद सखि सिद्ध्यति किं माने । प्रतिबन्धं कुरुषे निजरमणे स्वयमपि वससि शोकसन्ताने ॥ १ ॥ मैवं कुरु मयि पदपतिते निजमनसि विचारय रूपनिधाने । समये किमिति करोषि विलम्बं दयिते रतिरसदाने ॥२॥ महती मम सखि भवति पिपासा मधुराधरनिरुपमरसपाने । राधे नाधेया मयि दोषा दोषसमूहनिरासनिदाने ॥ ३ ॥

विभासरागेण गीयते ॥ ७२ ॥

अलसवलितं रजनिजागरारुणतरं कमलललितं जयति नाथ नयनम् । अर्धमुन्मीलितं प्रेयसीकीलितं सूचयति भामिनीभावचयनम् ॥ १ ॥ जितमीनखण्डनं लग्नदलिताञ्जनं निजहृदयरञ्जनं विहितदयनम् । युवतिजनरुचिकरं चित्तहृतितत्परं प्रकटरेखां विरहभरविलयनम् ॥ २ ॥ सहजचपलं परमलावण्यसहजलं भोगिनीभाग्यफलमधरशयनम् । दशदिक्षु सङ्गतं रसिकजनसंमतं सन्ततं सखि विहितरतिमृगनयनम् ॥ ३ ॥

विभासरागेण गीयते ॥ ७३ ॥

जागृहि जागृहि सुन्दरबाल । सुश्रृतपयः पिब दधि नवनीतं कुरु वदने निज गोकुलपाल ॥ १ ॥ विरचय रुचिरगोपश्रृङ्गारं मृगमदतिलकसुशोभितभाल । वादय सुत निजमधुरमुरलिकामानन्दद प-

रिहितवनमाल ॥ २ ॥ विपिने याहि गोपसहितो गोकुलमपि चारय चरणरसाल । अथवा विलस तातभवने जय जय कंसादिमहासुरकाल ॥ ३ ॥

विभासरागेण गीयते ॥ ७४ ॥

लालयति[1] दोलिकामञ्चशयनम् । तिलकगोरोचनं भालमुक्ताफलं कुटिलकुन्तलमुखं चकितनयनम् ॥ १ ॥ चरणसञ्चालनं मोदभरगायनं प्रतिबिम्बदर्शने मृदुलहासम् । बाललीलापरं पट्टसुमकरधरं(?) भाषणे फुल्लनासाविकासम् ॥ २ ॥ अङ्गुष्ठचोषकं गूढरसपोषकं स्वल्पसन्तोषकं कृष्णचन्द्रम् । गोपिकाजनमनोमोदसम्पादनं तदभिलषिताकृतौ विगततन्द्रम् ॥ ३ ॥

विभासरागेण गीयते ॥ ७५ ॥

बालक कथय कथय मधुवचनम् । श्रुतियुगलं परितपति कृपाकर श्रावय कृतरचनम् ॥ १ ॥ स्खलितपदं प्रकटीकृतसुरदं रदनच्छदविरचितलालम् । फुल्लनासिकहासविकासं करयुगतलवितरिततालम् ॥ २ ॥ चलितचरणकमलमतिविमलं सुखयतु मम हृदयं सुरसालम् ॥ ३ ॥

भैरवरागेण गीयते ॥ ७६ ॥

किं कुरुषे मयि मानं भामिनि । सकृदपराधे राधे नैवं कृतिरुचिता मदयुतगजगामिनि ॥ १ ॥ सपदि विहाय हृदयहितगर्वं कुर्वे चरणकमलनमनम् । कुरु वश्यं निजरसदानेन निवारय परमन्दिरगमनम् ॥ २ ॥ शिरसि निधेहि करं करुणे कुरु मामतिशयरसभावम् । विरहवह्निविज्वलितं मानिनि निर्वापय च हृदयदावम् ॥ ३ ॥

भैरवरागेण गीयते ॥ ७७ ॥

करणीयं न दोषगणनम् । वृन्दाविपिनकदम्बतले चिन्तय सखि

---

१ श्रीमत्प्रभुचरणकृतमिदं पदं प्रसिद्धम् ।

विहितवेणुरणनम् ॥ १ ॥ मा मामुद्धाटय निजरमणं यद्यपि विहितबहलदोषम् । सहजकृपालो पालय पतितं पदयो रहितविरहपोषम् ॥ २ ॥ किं कर्तुं कामयसे सुन्दरि शक्तोऽहं न विरहसहने । विचरिष्यामि विरागभरेण विसङ्गितया विपिने गहने ॥ ३ ॥

भैरवरागेण गीयते ॥ ७८ ॥

जीवय जीवय विरहिजनम् । अतिपरितापविशेषविकलता सन्ततसेवितविजनवनम् ॥ १ ॥ पल्लवतल्पगतेऽपि कदाचिदहह सखि भवति भूमिपतनम् । रक्षति लक्षणसहिते रहसि तवैव नामजपनम् ॥ २ ॥ क्वचिदपि भवति वियोगभरेण सखीषु वृथालपनम् । तिष्ठति मौनमुद्रया मीलितनयनयुगलनमनम् ॥ ३ ॥ सहजदयावति भवतीदयया भवति तापशमनम् । राधे नैव दोषगणनं कुरु झटिति वितनु चलनम् ॥ ४ ॥

भैरवरागेण गीयते ॥ ७९ ॥

हरिरिह विलसति यमुनाकूले । रणयति मुरलीमधरसङ्गतामतिशयशोभनीयमूले ॥ १ ॥ आकारयति धेनुसमुदायं गतवन्तं बहुदूरे । क्रीडति गोपतनयसहितोऽसिततरयमुनाजलपूरे ॥२॥ कामपि रमयति निभृतनिकुञ्जे पल्लवकुसुमसमूहे । अतिनिबिडे रविदर्शनरहिते परजनगमनदुरूहे ॥ ३ ॥

आसावरीरागेण गीयते ॥ ८० ॥

मिलितुं मुररिपुणा मया सह सहचरि चलसि वने । किमिति विलम्बं कुरुषे भामिनि रसनिधिहरिमिलने ॥ १ ॥ विविधनिकुञ्जे देशगतपल्लवतल्परचितशयने । धृतनिजनाथकण्ठकरकमला विलस मुदा विजने ॥ २ ॥ चपलेवाऽऽलि विराजसि मिलिता जलयुतनीलघने । निवस सदा हरिणा सह सखि हरिदासदीनवचने ॥३॥

आसावरीरागेण गीयते ॥ ८१ ॥

वद निजहृदयगतं राधे। किं ध्यायसि सखि रहसि निकुञ्जे दृढतरविहितसमाधे ॥ १ ॥ केन मनो लग्नं तव कथयाऽनुमितविरहबाधे। सपदि नयामि रसिकवरसन्निधिमथ हृदि विहितवृथाधे ॥२॥ किमिति विषीदसि वृथा विह्वले शिशिरगुणागाधे । सपदि मया सह चल हरिनिकटे गतहृदयोपाधे ॥ ३ ॥

आसावरीरागेण गीयते ॥ ८२ ॥

धैर्यमवलम्ब्य कुरु चौर्यमङ्गीकृते विलस निजगोपिकागारे। त्वदभिरुचिजननसम्पादितं निखिलमङ्गीकुरु प्रिय सततकृतविहारे ॥१॥ बाललीलामिषेणैव सङ्गोपय स्वकृतमखिलं जगति दोषभारे। पूरय मनोरथं बहुदिवससञ्चितं वच्मि किमधिकमितो विजितमारे ॥ २ ॥ वयमुपालम्भकृतये यशोदान्तिकं नाथ यामो यदा नन्दगेहम् । वैमनस्यं मनसि मा विधेहीश गोपितचरित गणय निजमेव देहम् ॥ ३ ॥

आसावरीरागेण गीयते ॥ ८३ ॥

जहिहि परं निजहठमभिमानिनि। चलसि न किं करिणीवाऽतिगामिनि ॥ १ ॥ अभिनवनीरदसुन्दररूपे। विलस सदा वृन्दावनभूपे ॥२॥ बर्हिपिच्छविरचितशृङ्गारे। ग्रथितरुचिरपल्लवसुमभारे ॥३॥
मृगमदतिलकविराजितभाले। ग्रथितालकततिमुक्तामाले ॥ ४ ॥
श्रुतियुगशोभितकनककुण्डले। द्युतिमण्डितमृदुगण्डमण्डले ॥५॥
भ्रूयुगचापहृताखिलमाने । तिलके विहितचरशरसन्धाने ॥ ६ ॥
मुक्ताभूषणभूषितनासे । निर्जिततिलसुमसुषमविकासे ॥ ७ ॥
अमितसुधाभरपूरिताधरे । युवतिवशीकृतिहेतुरसभरे ॥ ८ ॥
द्विजमणिगणसुषमायुतहासे । मणिमुक्तायुतहारविलासे ॥ ९ ॥

हीरकभूषितचिबुकभूषणे । द्युतिदूरीकृतदृष्टिदूषणे ॥ १० ॥ कण्ठलग्नवरकण्ठाभरणे । प्रतिबिम्बमनोजविभ्रमकरणे ॥ ११ ॥ हृदयविराजितहीरकपदके । विहृतगगनगतशशधरमदके ॥ १२ ॥ नाभिलम्बिमुक्ताफलहारे । हाटककृतमणिहाराधारे ॥ १३ ॥ अङ्गुलिदशकमुद्रिकामाले । कङ्कणजटितमहामणिजाले ॥ १४ ॥ अङ्गदशोभिमध्यभुजदण्डे । देवदैत्यजनदण्डितचण्डे ॥ १५ ॥ उत्तरीयवासोलसदंसे । विविधकुसुमचयविहितवतंसे ॥ १६ ॥ नृत्याभिनयनकृतिकटिचलिते । क्षुद्रघण्टिकारसितसुललिते ॥ १७ ॥ कनककपिशकटिवसनविकासे । नवविधरत्नहारकृतवासे ॥ १८ ॥ वनमालाकृतचरणालम्बे । तुलसीमधुमदयुतरोलम्बे ॥ १९ ॥ भ्रामितवामकराहितकमले । बोधितसकलाविदितनिजफले ॥ २० ॥ ऊरुयुगलद्वयरम्भाशोभे । दर्शनजनितमदनविक्षोभे ॥ २१ ॥ चरणयुगलशोभितमञ्जीरे । युवतीजनमानसहृतधीरे ॥ २२ ॥ नखविधुमण्डलविगलिततापे । प्रणतदीनजनवारितपापे ॥ २३ ॥ स्थितवति नीपमहीरुहमूले । वसति कलिन्दकन्यकाकूले ॥ २४ ॥ आकारणकृतवेणुनिनादे । रहितपक्षिपशुसङ्घविवादे ॥ २५ ॥ ग्रीवाकटिपदविरचितभङ्गे । प्रकटितरतिरसभावानङ्गे ॥ २६ ॥ श्रीवल्लभवरदासवराके । अनुकम्पय बहुदोषविपाके ॥ २७ ॥

गौडीरागेण गीयते ॥ ८४ ॥

हरिरधुना विपिनादायाति । मुरलीरवमाकर्णय मधुरं गोहुङ्कृतिरपि शर्म ददाति ॥ १ ॥ गायति गोपमण्डली गुणगणमतिशयशब्दनूपुरपाति । पल्लवकुसुमरत्नगुञ्जामणिमुकुटमसौ दूरादपि भाति ॥२॥ चलनीयं मिलनीयं हरिणा सुखमनुभवनीयं बहु राति । रसिकशिरोमणिमुखमवलोकय शोषय शोकनिचयमनुयाति ॥ ३ ॥

गौडीरागेण गीयते ॥ ८५ ॥

हरे हरे हर हृदि निहितम् । यदिह मया दुरितं विहितम् । स्मारय निजरूपं सुहितम् । तारय भवजलधिहितम् ॥ १ ॥ दीने मयि करुणा करणीया । विषयवासना परिहरणीया । शरणं गतवति रहितसहाये । मृदुलीभव मयि दयितसमाये(?) ॥२॥ अखिलपते तव किमिदमनुचितम् । पतितोरीकरणं हि विरचितम् । जल्पितमिति मम मनसि निधेहि । यदुचितमिह कृपयैव विधेहि ॥ ३ ॥



श्रीबालकृष्णशुद्धाद्वैतसंस्कृत पुस्तकालयकी मुद्रापित

# साम्प्रदायिक पुस्तकें.

| संस्कृत. | मूल्य |
|---|---|
| श्रीबालकृष्णचम्पू ... ... | २ |
| अणुभाष्य पञ्चटीकासहित ... | ३ |
| वादावलि ... ... | २ |
| वेदान्तचिन्तामणि ... ... | १ |
| भक्तिहंस ... ... | १ |
| पुष्टिप्रवाहमर्यादाभेद ... ... | ।= |
| सिद्धान्तसिद्धापगा ... ... | ।= |
| निर्णयार्णव ... ... | ।= |
| यमुनाष्टक श्रीपुरुषोत्तमजीकृत ... | । |
| यमुनाष्टक श्रीहरिरायजीकृत ... | । |
| बालबोध ... ... | । |
| ,, देवकीनन्दनजीकृत ... | । |
| सिद्धान्तमुक्तावलि ... ... | । |
| सेवाकौमुदी ... ... | ८= |
| माण्डूक्योपनिषत् ... ... | ॥ |
| दर्शनादर्श ... ... | ८= |
| स्तुतिपारिजात ... ... | ८= |
| व्याख्यानरत्नावलि ... ... | ८- |
| श्रीनृसिंहोत्तरतापिन्युपनिषत् ... | ।- |
| छान्दोग्योपनिषत् ... ... | ।- |
| विद्वन्मण्डनोपोद्घातः ... ... | १ |
| विवाहोपनयनादिकर्मणां मन्त्राक्षताः ... | ।= |

| हिन्दी तथा गुजराती. | मूल्य |
|---|---|
| शुद्धाद्वैतदर्शन [प्रथमभाग हिन्दी] ... | ॥ |
| शुद्धाद्वैतदर्शन [ द्वि. भाग हिन्दी] ... | ॥ |
| ,, [ तृ. भाग हिन्दी] ... | ॥ |
| ,, [प्रथम और द्वितीय भाग गुजराती] ... | १ |
| ,, [तृतीय भाग गुजराती] | ॥ |
| मराठी प्र. भा. ... ... | ॥ |
| सेवाकौमुदी [हिन्दी] ... ... | ।≡ |
| शुद्धाद्वैतसिद्धान्तसार [हिन्दी] ... | । |
| शुद्धाद्वैतसिद्धान्तसार [गुजराती] ... | । |
| न्यासादेश [हिन्दी] ... ... | ८= |
| ,, [गुजराती] ... ... | ८= |
| गीतातात्पर्य [हिन्दी] ... ... | १। |
| सिद्धान्तरहस्यकी विवृति[हिन्दी टीकासहित] | ॥ |
| श्रीमद्वल्लभाचार्य [हिन्दी] ... | ८- |
| श्रीराधाकृष्णतत्त्व [हिन्दी] ... | ८- |
| ब्रह्मसम्बन्ध [हिन्दी] ... ... | ८- |
| षोडशग्रंथ [व्रजभाषा] ... ... | ॥ |
| वैष्णवद्विजानां संध्यातर्पणं [गुजराती भाषासहित] | ८= |

अन्य सब प्रेसोंकीभी पुस्तकें हमारे यहां मिलती हैं. विशेष जाननेके लिये ८॥। का टिकट भेजकर सूचीपत्र मंगाओ।

मैनेजर—

श्रीबालकृष्णपुस्तकालय, बडामन्दिर, भूलेश्वर, बम्बई.